शास्त्रमुक्तावली

# मूलगदाधरीये–शब्दः

( शब्दप्रामाण्य पूर्वपक्षग्रन्थपर्यन्तम् )

महामहोपाध्याय श्रीगदाधर भट्टाचार्य विरचित.,

श्रीमद्गङ्गेशोपाध्याय विरचितेन मणिना सह

श्रीकांची प्रतिवादिभयंकरानन्ताचार्येण

परिशोधित.,

श्री सुदर्शन मुद्राक्षरशालाया ममुद्रित ।

॥ श्रीकाञ्ची ॥

( प्रथमसम्पुटम् )



1904

इदानीमस्य मूल्यम् १ -० -०

श्रीरस्तु ।

शास्त्रमुक्तावली ।

श्रीमते हयग्रीवाय नमः ।

# तत्त्वचिन्तामणौ शब्दखण्डः ।

( गदाधरीयेन सहितः । )

## अथ शब्दो निरूप्यते ।

## गदाधरीयम् ।

अये श्रीमद्देवासुरमकुटमाणिक्यनिकर
स्फुरन्नावल्गद्दन्तावलवदनपादाम्बुजयुगम् ।
अशेषप्रत्यूहप्रकरशमनैकान्तनिपुणम्
सदा भक्ताभीष्टप्रसरनवकल्पद्रुमवरम् ॥ १ ॥

निजगुरुहरिरामनामभूमीध्रमुदितभास्करवाङ्मयूखयोगात् ।
स्फुरदमलवितर्ककान्तिगुम्भं परमर्माणि विवरीतु मुद्यतोऽस्मि ॥ २ ॥

निबन्धाः प्राचीने समुदधिपर्यन्तविचर
द्यशोदास्ते सद्भिर्भुवि विरचिता सन्त्यपि यदि ।
तथाप्येषा काचिद्वचनपरिपाटी निजगुणै
र्गंभीरा धीराणां सपदि मुदमाधास्यतितराम् ॥ ३ ॥

प्रत्यक्षानुमानोपमानात्मकं प्रमाणत्रयं क्रमेण निरूपितं, तुरीयप्रमाणं निरूपयितुं शिष्यावधानाय प्रतिजानीते ( अथ शब्दो निरूप्यत इति ) इदमथशब्द उपमाननिरूपणानन्तर्यपरः, तस्य प्रक्रान्त

क्रियानन्तर्यवाचकत्वात् । चैत्रेण पच्यते अथ भुज्यते इत्यादौ
पाकानन्तर्यस्य भोजनादौ प्रतीतेः । प्रकृते च पूर्वग्रन्थस्थेन "उप
मानं निरूप्यते" इत्यनेनोपमाननिरूपणस्य प्रक्रान्तत्वात् ।

अथ उपमाननिरूपणाद्यात्मकाद्यर्थ्युपरक्तानन्तर्यस्याथशब्दवाच्यत्वे
शक्त्यानन्त्यप्रसंगः, तदनुपरागेणानन्तर्यमात्रस्य वाच्यत्वे उपमान
निरूपणाद्युपरक्तानन्तर्यप्रतीत्यनुपपत्तिः; नच "उपमानं निरूप्यते"
इत्यादिपूर्वग्रन्थादिस्थवाक्यानुषङ्गात् तदुपस्थापितोपमाननिरूपणादेः
प्रकृताथशब्दार्थानन्तर्यावधित्वेनान्वयात् तदवधिविशेषोपरक्तानन्तर्य
लाभसम्भव इति वाच्यम्, आख्यातार्थविशेषणतयोपस्थितस्य
निरूपणादे रथशब्दार्थानन्तर्यविशेषणत्वेनान्वयासम्भवात् ।
एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणत्वेनान्वये आकांक्षाविर
हात्; "उपमानं निरूप्यते" इत्यादितो निरूपणकर्मत्वादे रुप
मानादौ बोधेन उपमानकर्मकत्वादिविशेषितनिरूपणाभानेन तादृश
निरूपणादे रानन्तर्यावधित्वेन भानासम्भवाच्चेति चेन्न- अवधि
भूतोपमाननिरूपणान्तर्भावेणैवाथशब्दशक्त्यभ्युपगमात् । पूर्ववाक्यस्थ
धातुतात्पर्यविषयतावच्छेदकत्वेनोपलक्षणीभूतानुगतधर्मेण तत्तत्क्रि-
यागतविशेषरूपाणामननुगमाच्छक्त्यैक्यसम्भवात् । बुद्धिविशेषविष
यतावच्छेदकत्वरूपोपलक्षणीभूतानुगतधर्मेण घटत्वपटत्वादिरूपसर्व
नामबोध्यतावच्छेदकविशेषधर्माणां सर्वनामशक्यतावच्छेदकतया
तदीयशक्त्यैक्यवत् । सामान्यतः पूर्वत्वस्य व्यावर्तकतया स्वपूर्वत्व
मेवानुगमकधर्मं निवेश्य मिति स्वपदार्थाननुगमाच्छक्त्यैक्यासम्भव
दोष स्सर्वनामशक्तिस्थलेऽपि सामान्यतो बुद्धिविषयतावच्छेदकत्वस्य
व्यावर्तकतया स्वप्रयोगानुकूलबुद्धित्वेनैव निवेशनीयतया स्वत्वाननु
गमदोषश्च कथंचित्परिहरणीयः । "उपमानं निरूप्यते" इत्या
दितः उपमाननिरूपणाद्यादिना निरूपणादिक्रियाया श्शाब्दबोधे प्रभा

ऽपि शाब्दबोधोत्तरं तादृशरूपेण तत्तत्क्रियाबोधात्, तादृशरूप-स्यापि तत्तद्वाक्यस्थधातुतात्पर्यविषयतावच्छेदकताया अनुमानलभ्यतावच्छेदकवह्निमत्त्वादि धूमोऽस्तीत्यादि वाक्यतात्पर्यविषयतावच्छेदकताव त्सम्भवो बोध्यः। निरूपणयोः पौर्वापर्यकथनन्तु सिद्धसाध्यसमभिव्याहारलभ्यस्य तयोर्हेतुहेतुमद्भावस्यलाभाय । सिद्धसाध्यसमभिव्याहारस्थले यस्य यदपेक्षया प्राक्कालीनत्वरूपं सिद्धत्वं प्रतीयते, असतिबाधके तस्य हेतुत्वं; यस्य यदपेक्षया उत्तरकालोत्पत्तिकत्वं वर्तमानकालीनप्रागभावप्रतियोगित्वरूपं साध्यत्वं प्रतीयते, तस्य तद्धेतुकत्वं प्रतीयते इति व्युत्पत्तिः; पक्त्वाभुङ्क्ते पापक्षिपति तुषाशाम्यती त्यादितः पाकभोजन पापःपातदूषाशान्त्याद्योः पौर्वापर्यस्य लाभात् । चैत्रो-पाक्षीदिदानीं भुङ्क्ते इत्यादौ पाकभोजनाद्यो मिथः पौर्वापर्यस्य साक्षाच्छब्दतो यद्यपि न लाभः, पाककृतौ वर्तमानकालापेक्षया तीतत्वस्य भोजनकृतौ वर्तमानकालवृत्तित्वस्यैव. शब्देन बोधनात्; तथापि यद्वर्तमानकृतिजन्यं तद्वर्तमानकालापेक्षया ऽतीता या कृति स्तज्जन्यो-त्तरमिति व्याप्ते स्तयो मिथः पौर्वापर्यं लाभः ।

यत्तु " निरूप्यते " इत्यस्य वर्तमानार्थकलट्प्रत्ययान्तत्वेन शब्दनिरूपणस्य साध्यतयोपस्थितेरिति तुच्छै रुक्तम् । तन्न साधु, आनन्तर्यं वाचकाथशब्दत उपमानशब्दनिरूपणयोः पौर्वापर्यरूप सिद्धत्वसाध्यत्व यो र्बोधनात् तयो र्हेतुहेतुमद्भावलाभसम्भवेन वर्तमानकालोत्तरकालीनत्वरूपसाध्यत्वबोधस्या नर्थकलट्प्रत्ययान्ततायाअनुपयोगात्, वर्तमानार्थकलट्प्रत्ययं विनापि पक्त्वाभुक्तवानित्यादौ पाकभोजनाद्यो र्हेतुहेतुमद्भावबोधेन सर्वत्र तदपेक्षाया असम्भवाच्च ।

हेतु हेतुमद्भावश्च यद्यपि नोक्तस्थलेषु शाब्दधीविषयः, तदुपस्थापकपदाभावात्; तथापि सिद्धसाध्यसमभिव्याहारेणा भिधानस्य हेतुहेतुमद्भावपरताया औत्सर्गिकतया तत्परत्वानुमानलभ्य एवासावितिपदोषः । तदवाचकादेव पदात् लक्षणयैववा तच्छाब्दबोधः ।

यद्यपि निरूपणयोः कार्यकारणभावो न संगतिः, निरूप्ययोरेव तथाभावस्य तल्लक्षणाक्रान्तत्वात्; प्रकृतेतस्य बाधोऽपि, उपमानप्र-निरूप्यापि शब्दनिरूपणसम्भवात्; एतेन निरूपणयोः कार्यकारण भावस्य संगतित्वविरहेऽपि क्रमनियामकाकांक्षया तत्प्रदर्शन मित्यपि परास्तं, निरूप्ययो रुपमानशब्दयोश्च सिद्धसाध्यभावेन प्रकृते ऽनुपस्थितया तयो र्हेतुहेतुमद्भावो व्युत्पत्तिलभ्यः; तथापि निरूपणयो स्तदवधारणे " सविशेषणेही " ति न्यायेन निरूपणविशेषणयो स्तल्लाभइतिपूर्वापरग्रन्थैक वाक्यताप्रतिपत्तये संगत्यात्मकतत्प्रदर्शनम् ।

यद्यपि फलद्वारा शब्दप्रमाणस्य ज्ञानकरणतापक्षे स्वरूपतोऽपि पदशक्तिग्रहात्मकोपमितिरूपशाब्दप्रमाकरणस्य शक्तिग्रहात्मकोपमानो पजीवकतावत् उपमानस्यापि फलद्वारा ऽतिदेशवाक्यार्थज्ञानस्यो पमितिकरणत्वे स्वरूपतोऽप्यतिदेशवाक्य ज्ञानाधीनतया प्रमाणयो रुपजीव्योपजीवकभावेन नतन्निरूपणयोः पौर्वापर्यनियमः, तथापि तन्निय मस्य संगतित्वा प्रयोजकतया न क्षतिः । संगतिप्रदर्शने प्रयोजना न्तरसत्त्वेन क्रमनियामकाकांक्षाशान्ते स्तत्प्रयोजनत्वविरहेऽपि न दोषः ।

मिश्रास्तु अन्यूनविषयकप्रमित्युपजीवकतायाः प्रमित्यन्तरनिष्ठायाः प्रमाणान्तराभिधान प्रयोजकत्वं निरपवादं, गवयो गवय पदवाच्य इत्युप मिते स्तादृशशाब्दबोधान्यूनविषयकत्वात्, तदुपजीव्यत्वाच्च शाब्दप्रमितौ स्वान्यूनविषयकोपमित्युपजीवकत्व सत्त्वा त्तादृशोपमित्युपजीव्यातिदेशवा-क्यार्थज्ञानस्य गवयत्वविशिष्टाविषयकत्वेन न्यूनविषयकत्वयोपमितौ स्वान्यू नविषयकशाब्दप्रमि त्युपजीवकत्वाभावात् । वस्तुतो मानतावच्छे-दकधर्मावच्छिन्नोपजीव्यतानिरूपित त्युपजीवकत्व मानन्तर्याभिधान प्रयोजकम् । शक्तिपरिच्छित्तिरेवोपमानफलं, न तु कारणतापरिच्छि-त्तिरपीति उपमानमात्रस्यैव शब्दोपजीव्यता, अतिदेश वाक्यातिरिक्त शब्दस्य च नोपमानोपजीव्यत्वमिति न कश्चि द्दोषइत्याहुः ।

## प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणम् ।

---

सजातीयविजातीयव्यावृत्ततया ज्ञापनरूपनिरूपणस्य प्रतिज्ञातत्वा च्छब्दप्रमाणस्ये तरभेदानुमापकं लक्षणमाह ( प्रयोगेति ) प्रयोगः-प्रकृत वाक्यं, तद्धेतुभूतं, यदर्थतत्त्वज्ञानं - प्रमारूप मर्थज्ञानम् , तज्जन्यश्शब्दः- प्रमाणशब्द इत्यर्थः ।

प्रमाणशब्दत्वं लक्ष्यतावच्छेदकं, तादृशज्ञानजन्यशब्दत्वं लक्षणम् । लक्ष्यतावच्छेदके शब्दत्वानन्तर्भावे प्रत्यक्षादा वव्याप्तेः, लक्षणे तदनन्तर्भावे तादृशज्ञानजन्यसंस्कारादा वतिव्याप्ते, रुभयत्र तदन्तर्भावः । स च शब्दपदान्तरपूरणेन निर्वाह्यः, ननु काकाक्षि न्याया न्मध्यस्थशब्दपदस्यो भयत्र सम्बन्धात्, उद्देश्यविधेयोपस्थापक पदयोः पौर्वापर्यस्या काङ्क्षात्वेनो द्देश्यविधेयभावप्रयोजकतये कपदोप स्थाप्यस्य शब्दत्वस्य उद्देश्यविधेयकोट्योः प्रवेशायोगात् । नहि शाल इत्येतावन्मात्रोक्तौ वृक्षत्वावान्तरजातिविशेषवृक्षत्वाभ्यां वृक्षस्यो पस्थितावपि पदान्तराध्याहारं विना शालो वृक्ष इत्यन्वयधीः ।

यत्तु कीदृशशब्दः प्रमाणशब्द इत्याकाङ्क्षायां प्रयोगहेतुभूतार्थ तत्त्वज्ञानजन्य इत्युक्तत्वमिति लक्षणदिशि शब्दपदाश्रवणेपि तादृश ज्ञानजन्यशब्दत्वरूपलक्षणलाभः, को रस आम्रस्येति प्रश्ने मधुर इत्येतावन्मात्रोत्तरतोपि मधुरो रस आम्रस्येति बुद्ध्युदयात् प्रश्नो त्तरभावस्थले प्रश्नस्थकिंपदार्थान्वयितावच्छेदकविशिष्टे उत्तरप्रति पाद्यविशेषरूपान्वयस्य व्युत्पत्तिसिद्धत्वादिति । तदपि न मनोज्ञं, उक्तस्थले प्रश्नस्याम्रस्येत्यन्तानुषङ्गेणैवोपदर्शितबोधस्योत्पत्तेः । अत्र च कश्शब्दः प्रमाणमिति प्रश्नाश्रवणेन शब्दपदान्तरपूरणस्यावश्य कत्वात् । अन्यथा शब्दः प्रमाण मित्यस्यापि वैयर्थ्यप्रसंगात् ।

वस्तुतः शब्दोगुण इत्यादिप्रत्यक्षकरणस्य तादृशार्थबोधोपयिकाकांक्षारहितवाक्यस्य वारणाय प्रमासामान्यबोधकपदस्य शाब्दप्रमारूपविशेषपरतया अवश्यवाच्यतया शाब्दप्रमाकरणत्वरूपलक्ष्यतावच्छेदकलाभनिर्वाहात लक्ष्यदिशि शब्दपदान्तरपूरणादिकं विनैव प्रत्यक्षादिव्यावृत्तलक्ष्यतावच्छेदकलाभा नाव्याप्ति रिति ध्येयम् ।

मिश्रास्तु – प्रयोगहेतुभूतत्वं – प्रयोगसामग्रीसहकृतत्वं, भूधातोः प्राप्त्यर्थकतया सहकार्यसहकारिभावसम्बन्धरूपप्राप्ते रेवात्र विवक्षितत्वा त्प्रयोगसामग्रीसहकृतत्वस्य भूतान्तेन लाभः । एवं च प्रयोगसामग्रीजन्यत्वे सत्यर्थतात्पर्यज्ञानजन्यत्वं पर्यवसितं लक्षणम् । प्रयोगपदं शब्दपरम् । प्रकृतवाक्यार्थविशिष्टवैशिष्ट्यबोधात्मकस्य शब्दप्रागभावप्रत्यक्षस्य विशेषणतावच्छेदकप्रकारकज्ञानविधया वाक्यार्थज्ञानहेतुकस्य शब्दप्रागभावरूपविषयजन्यस्य वारणाय प्रागभावमुपेक्ष्य हेतुपदस्य सामग्रीपर्यन्तपरत्व, शब्दसामग्र्या श्शब्दातिरिक्तेऽहेतुत्वात् । नच अर्थपदस्य स्वप्रतिपाद्यपरतया आवश्यकत्वेन प्रागभावप्रत्यक्षे नातिव्याप्त्यवकाशः, पय करणक सेकादिरूपवाक्यार्थस्य तत्प्रतिपाद्यत्वाभावादिति वाच्यं, तादृशवाक्यार्थविशिष्टवैशिष्ट्यबोधरूपस्य प्रागभावप्रत्यक्षस्य योग्यताज्ञानविधया तादृशवाक्यार्थविषयकशाब्दबोधे हेतुत्वा त्तादृशवाक्यार्थे तज्जन्यशाब्दबोधविषयत्वरूप तत्प्रतिपाद्यत्वस्या क्षतत्वादिति वदन्ति । तन्न साधीयः, शब्दत्वस्य लक्षणे निवेशेनैवोपपत्तौ शब्दसामग्रीजन्यत्वपर्यन्तनिवेशस्या नतिप्रयोजनत्वात्; वक्तृवाक्यार्थज्ञानस्य वाक्यार्थज्ञानज्ञानोपयोगिनः परकीयवाक्यार्थज्ञानेच्छादिद्वारा वाक्यप्रयोगहेतुत्वात पयसासिञ्चतीतियोग्यवाक्ये वक्तृवाक्यार्थप्रमाजन्यतया लक्षणसमन्वयः । अयोग्यवाक्यार्थज्ञानस्य प्रमात्वाभावा न्नतत्रातिव्याप्तिः ।

अथ सामान्यतो वाक्यं प्रति वाक्यार्थज्ञानस्य हेतुतानसम्भवति, शुकादिवाक्ये व्यभिचारात्; स्वतात्पर्यकवाक्यत्वस्य जन्यतावच्छेदकत्वोपगमेऽपि नाव्यभिचारनिर्वाहः, विशिष्यवाक्यार्थज्ञानविनापि विशकलितविशेष्यविशेषणयोर्ज्ञानात् तद्विशेष्यकतत्प्रकारकत्वेन ज्ञात्वा विशिष्टबोधकवाक्यप्रयोगसम्भवात्; वस्तुतो निस्तात्पर्यकशुकादिवाक्यस्येव वाक्यार्थबुबोधयिषाधीनवाक्यस्यापि वाक्यार्थज्ञानाघटितसामग्रीत उत्पत्तिसम्भवात् वाक्यार्थज्ञानमन्यथासिद्धमेव; एवं क्रमोत्पन्नवर्णसमुदायपर्याप्तवाक्यत्वावच्छिन्नस्य क्वचिदपि क्षणे नोत्पत्तिरिति वाक्यत्वस्य कार्यतावच्छेदकत्वमसम्भवदुक्तिकं, एतेन योग्यस्थले सर्वज्ञपरमेश्वरीयवाक्यार्थज्ञानमादाय व्यभिचारोपपादनेऽपि न निस्तार इति चेत्? माभूदुक्तवाक्यार्थज्ञानं वाक्ये कारणं, तथापि तस्य तत्प्रयोजकत्वमनपवादमेव; तथाच लक्षणस्य 'जन्य' पदस्य प्रयोज्यपरतया नानुपपत्तिः।

वस्तुत उपादानप्रत्यक्षविधया हेतुभूतभगवद्वाक्यार्थज्ञानजन्यत्वमादायैव संवादिशुकादिवाक्यस्य संवादिवाक्यान्तरेऽपि लक्षणसमन्वयः। न चैवं तत्त्वपदवैयर्थ्यम्, वह्निना सिञ्चतीतिवाक्ये वक्तृवाक्यार्थज्ञानस्योक्तयुक्त्या अकारणत्वात्, भगवतः प्रकृतवाक्यार्थज्ञानाभावात् अतिव्याप्त्यप्रसक्तेरिति वाच्यं; जन्यत्व प्रवेशेऽपि कालोपाधिमुद्रया वाक्यार्थभ्रमहेतुके विसंवादिवाक्येऽतिव्याप्ति वारणाय तत्पदस्यावश्यकत्वात्। वह्निना सिञ्चतीत्यादि वाक्येऽपि प्रत्येकपदार्थावान्तरवाक्यार्थतत्त्वज्ञानजन्यत्व मादाय अतिव्याप्तिवारणाय "प्रयोग हेतुभूते" ति। प्रत्येकपदेषु प्रत्येकवाक्येषु च तत्तदर्थतत्त्वज्ञानजन्यतया तत्समुदायात्मके विसंवादिवाक्ये अर्थतत्त्वज्ञानजन्यत्वसत्त्वेऽपि कस्यापि पदार्थज्ञानस्य अवान्तरवाक्यार्थज्ञानस्य वा लक्ष्यतावत्पदसमुदायाहेतुतया नातिव्याप्तिः।

यद्यपि तत्तत्पदार्थं प्रत्यन्तरवाक्यार्थावगाहमानस्य भगवज्ज्ञानस्य समूहालम्बनरूपजन्यप्रमाणस्य तत्तत्पद समुदायरूपविसं-

घादिवाक्यहेतुतया तिव्याप्तिवारणशक्यमेव ; एवं प्रमास्वरूपयोग्य मात्रस्यलक्ष्यत्वे वह्निना सिंचतीत्यादिनिखिलवाक्यस्यैवाबाधित लक्ष्यार्थ गोचरप्रमास्वरूपयोग्यत्वेन लक्ष्यतया प्रयोगहेतुभूतत्वादि विशेषणव्यावृत्त्यभावा द्वैयर्थ्यं ; तद्धर्मिणि तद्धर्मावगाहिप्रमाजन्य शब्द स्तस्य धर्मिण स्तद्धर्मवत्त्वे प्रमाणमिति विषयविशेषनियन्त्रितप्रमाणलक्षण परत्वेपि भूतान्तविशेषणमनर्थकं ; पदार्थतात्त्व ज्ञानजन्यत्वस्य ; विसंवादिवाक्यसाधारण्येपि सेकादिधर्मिकवह्निकरणत्वादिप्रमाया अप्रसिद्ध्या विसंवादिवाक्ये तत्तद्धर्मिणि बाधिततद्धर्मांशे प्रमाणत्वा प्रसक्तेः; तथा ऽप्येतादृशविशेष्यविशेषणनियन्त्रितलक्षणलाभाय भूतान्तम् ।

वस्तुतः घटः कर्मत्व मानयनं कृति रित्यादिस्वरूपा योग्य निराकांक्षवाक्यस्य घटकर्मकानयनादिरूपविषये प्रामाण्यवारणाय फलोपहितमात्रस्य लक्ष्यत्वे फलानुपधायक साकांक्षयोग्यवाक्येव्याति व्याप्तिवारणाय स्वं यत्र यत्प्रतिपत्ते योग्य मुपधायकं वा तत्र तत्प्रमाजनकत्वपर्यन्त मवश्यं वक्तव्यम् । तल्लाभायैव भूतान्त मर्थविशेषणम् । प्रकृतप्रयोगरूपहेतो यों भूतः ग्राम इति व्युत्पत्त्या अर्थे स्वबोध्यत्वलाभात् अर्थपदस्य विशिष्य तत्तदर्थपरतामाश्रोपगमेन तत्तदुक्तार्थलाभात् ।

अथवा - प्रयोगहेतुभूतत्वं - प्रयोगो हेतु र्यस्य तत्सम्बन्धित्वं, स्वजन्यज्ञानसमानविषयकत्वपर्यवसितं तादृशज्ञान एव विशेषणम् ; तावता स्वं यत्र धर्मिणि यत्प्रतिपादकं तत्र तत्प्रमाजनकत्वं निरा कांक्षादिव्यावृत्तं लक्षणार्थः ।

अथ वर्णत्वेन शाब्दप्रमासामान्यं प्रति स्वरूपयोग्यतया प्रमा स्वरूपयोग्यमात्रस्य लक्ष्यत्वे अर्थे स्वप्रतिपाद्यत्वविशेषणदान मयुक्तम्; नच - ध्वन्यात्मकशब्दवारणाय तदावश्यकता, शब्दाख्यस्थले वर्णानां नियमेनैव तद्वारणो चितत्वात् ; वर्णत्वादिजाते स्तारत्वादिजातिवत्प्रामाणिकतया शब्दत्वेनैव शाब्दप्रमासामान्यहेतुतया ध्वनेरपि लक्ष्यतो

चिरपाचेति चेन्न;- घटः कर्मत्व मित्यादिनिराकांक्षवाक्यस्य शाब्द
स्वरूपेण घटकर्मत्वादिविषयकप्रमात्वरूपयोग्यत्वेपि प्रमात्वनियतधर्मा
वच्छिन्न तत्तदर्थविषयक प्रमानिष्ठकार्यतानिरूपित स्वरूपयोग्यताया
एव तत्तदर्थनियन्त्रित प्रमाणलक्षणलक्ष्यतावच्छेदकतया घटः कर्मत्व
मित्यादौ सुतरां तिव्याप्ति रर्थे स्वप्रतिपाद्यत्वविशेषणदान मन्तरेण दुर्वा
रत्वात् । नहि घटः कर्मत्व मित्यादिवाक्यस्य प्रमात्वनियतकर्म-
त्वादिविशेष्यक घटादिप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति स्वरूप
योग्यता, तत्तदर्थबोधे परस्पराकांक्षतत्तदर्थोपस्थापकपदत्वेनैव स्व
रूपयोग्यता, इति तादृशवाक्यस्यालक्ष्यत्वात् । नच – तत्र घट
पदोत्तरं स्पदाद्यादिरूपाकांक्षाभ्रमा च्छाब्दबोधोत्पत्त्या तत्तदाकांक्षा
ज्ञानविषयत्वेनैव तत्तदर्थविषयकशाब्दबोधयोग्यता, नतु तादृशाकांक्षा
वत्त्वेनेति निराकांक्षवाक्यस्यापि स्वरूपयोग्यत्व मव्याहत मेवेति
वाच्यं; तादृशरूपेण हेतुत्वे ष्याकांक्षाभ्रमाविषयतादृशवाक्यव्यक्ती
नां स्वरूपायोग्यत्वस्य दुर्वारत्वात् ।

प्रयोगो हेतुभूतो यस्यार्थतत्त्वज्ञानस्येति समासात् ज्ञानान्तं शा
ब्दप्रमायां, तदेव जन्यं यस्येति बहुव्रीह्यन्तरावलम्बनाच्छाब्दप्रमा
करणत्व समुदितलक्षणवाक्यार्थः । प्रत्यक्षादिप्रमाणातिव्याप्तिवारणाय
शाब्दत्वं प्रमाविशेषणतयोपात्तम् । शब्दपदस्य लक्ष्यनिर्देश सम्प-
र्थ्यः । लक्ष्यतावच्छेदकं च शाब्दप्रमाणत्वं शाब्दप्रमाणव्यवहारविषयत्वं,
नतु शाब्दप्रमाकरणत्वं, अतो न लक्षणलक्ष्यतावच्छेदकयो रभेद
इत्यपि वर्णयन्ति ।

यथाश्रुतं तादृशज्ञानजन्यशब्दत्वरूपं लक्षणं ज्ञायमानशब्दस्य
करणताभिप्रायेण । अतीतानागतशब्दज्ञानादपि प्रमोत्पत्त्या शब्दज्ञान
स्यैव करणत्वमिति स्वमतेतु शब्दज्ञानत्वं लक्षणं सूक्ष्मम् ।

प्रत्यक्षमात्रप्रामाण्यवादिनं चार्वाकस्यानुमानखण्ड एव निराकृत
त्वात् सम्प्रति प्रत्यक्षानुमानोभयप्रामाण्यवादिनं सौगतं निराकर्तु

नतु शब्दो नप्रमाणं । तथाहि –

---

तन्मतेन शंकते ( नन्विति ) शब्द स्तज्ज्ञानं वा, " न प्रमाणं " -
न प्रमाणव्यवहारविषय इत्यर्थः । प्रमितिकरणत्वाभावस्य साध्यत्वे
" तथ हि करणविशेषः प्रमाण " मित्यग्रिमग्रन्थेन प्रमाकरणत्वस्य
प्रमाणव्यवहारविषयतावच्छेदकत्व मभिधाय, प्रमारूपफलायोगव्यव
च्छिन्नरूपात्मकप्रमाकरणत्वाभावस्य हेतुत्वाभिधानविरोधात् । यदि च
प्रमायोगव्यवच्छिन्नत्वविशिष्टप्रमाकरणत्वाभाव स्साध्यः, तादृशविशे-
षणसाहित्याभावो हेतु रित्युच्यते; तदा साध्यविशेषविरहेण यथाश्रुत
स्यापि संगतिः । नच – विशिष्टप्रमाकरणत्वाभावस्य साध्यत्वे सा
ध्यविशेषस्वीकरणेन परिहारेऽपि करणविशेष इत्यादिना प्रमाकर
णत्वविशिष्टस्य प्रमाणपदवाच्यत्वाभिधानस्या नुपयोगित्वं दुर्वारं,
प्रमाणपदार्थत्वाभावस्य साध्यत्वे च प्रमारूपफलायोगव्यवच्छिन्नत्वरूप
प्रमाकरणत्वस्य प्रमाणपदार्थतानवच्छेदकत्वे तदभावस्य प्रमाणपदार्थ
त्वाभावसाधकताया अप्रयोजकत्वेन निर्वक्तुमशक्यत्वात् तादृशप्रमाकर
णत्वस्य प्रमाणपदार्थतावच्छेदकत्वाभिधानसंगते रिति वाच्यं, फला
योगव्यवच्छेदस्या भावरूपसाध्यप्रतियोगितावच्छेदकप्रवेश एव फला
योगव्यवच्छेदाभावरूपहेतौ स्तादृशसाध्यव्याप्यत्वावगमतया नाप्रयोजक
त्वशंकाया विच्छेत्तुं फलायोगव्यवच्छेद मन्तर्भाव्य " करणविशेषः
प्रमाण " मित्यादिना साध्यस्यप्रमाणपदार्थविवरणस्यौचित्येन तद्ग्रन्थ
संगतेः । शब्दस्य विषयतया स्वप्रत्यक्षकरणत्वेऽपि नांशतो बाधादिः,
शब्दप्रत्यक्षातिरिक्तप्रमाया स्साध्यादिघटकत्वात् । व्यवहारघटित
साध्यपक्षेऽपि शब्दप्रत्यक्षातिरिक्तप्रमाणव्यवहारो विवक्षणीयः ।

करणविशेषः प्रमाणं ! करणंच तत्, यस्मिन् सति क्रियाभवत्येव। नच शब्देसति प्रमाभवत्येव,- इति नायं शब्दः प्रमाणम् ।

नच - शब्दोनप्रमाणमिति वाक्यस्य प्रामाण्याप्रामाण्ययो र्व्याघात',

---

( करणविशेष इति ) प्रमायाः करण मित्यर्थः । " प्रमाणम् "- प्रमाणपदार्थः । अतो नोद्देश्यविधेययो रेकरूपेणोपस्थित्याऽनन्वयः । ( यस्मिन् सतीति ) यदधिकरणक्षणाव्यवहितोत्तरक्षणे स्वसमानाधिकरणफलायोगो नास्ति, तत्करण मित्यर्थः । सामानाधिकरण्यं च कारणतावच्छेदकसम्बन्धेन स्वाधिकरणे कार्यतावच्छेदकसम्बन्धेन वृत्तिः । अयोगः - अनुत्पत्तिः । " नच - शब्दे " तज्ज्ञानेपि " सति "- तदग्रिमक्षणे, "प्रमा भवत्येव"- नियमेनोत्पद्यते, तत्सत्त्वेपि सहकारिविलम्बेन व्यापारविलम्बेन तद्विलम्बादिति भावः । " इति वाक्यस्य "- इत्यादिभवदीयवाक्यस्य । ( प्रामाण्याप्रामाण्ययो र्व्याघात इति ) प्रामाण्ये शब्दस्या प्रामाण्यसाधनानुपपत्तिः; प्रामाण्याभावे भवता तादृशशब्द प्रयोगानुपपत्तिः, परस्यशब्देऽप्रामाण्यविषयक प्रमोत्पत्त्यर्थमेव तादृशवाक्य प्रयोगात् तादृशवाक्याप्रामाण्ये परकीय तादृश प्रमारूपेष्टसाधनत्व ज्ञानासम्भवात्; नहि शब्देन साक्षात्प्रमाप्य प्रमाया अजननेपि परम्परयानुमित्यात्मक तत्प्रमाजननसम्भवः, न्यायस्य तद्घटकवाक्यस्य च वाक्यार्थप्रमाद्वारैवानुमित्युपयोगित्वादितिभावः ।

न्यायस्य तद्घटकवाक्यस्यवा वाक्यार्थबोधा जनकत्वेपि प्रत्येक पदार्थोपस्थित्य संसर्गाग्रहमूलक वाक्यतात्पर्यविशिष्टार्थ गोचरमानसधीद्वारोद्देश्यानुमिति निर्वाहकत्वमक्षतमेवेति न मिचारव्याघात इति

अस्या प्रमाण्येपि एतदुत्थाप्यानुमाना विसंवादात् ।
-इतिचेन्न ; —

आकांक्षादिमतः पदार्थस्मरणादि व्यापारवतः प्रमाणत्वेन तत्सत्त्वे प्रमोत्पत्ते रावश्यकत्वात् । अतथाभूतत्वे च फलाजनकत्वस्य करणान्तर साम्यात् ।

---

समाधत्ते (अस्या प्रामाण्येपीति)"अस्य"-शब्दो नप्रमाणमिति वाक्यस्य । "अप्रामाण्येपि" – साक्षा त्प्रमाजनकत्वाभावेपि । "एतदुत्थाप्यानुमाना विसंवादात्"-परम्परया तन्निर्वाह्यानुमिते र्यथार्थत्वात् । एतदुत्थाप्यमाना विसंवादिति क्वचित्पाठः । अनुमानेति पाठेपि अनुपश्चान्मानमिति व्युत्पत्त्या मानसज्ञानमेव तदर्थइति केचि द्वर्णयन्ति । तच्चिन्त्यम् ।

अस्माभिः शब्दत्वावच्छेदेन तज्ज्ञानत्वावच्छेदेनवा न प्रमाकरणत्व मुपेयते , अपितु तत्सामानाधिकरण्यमात्रेण ; अतस्सौगतै स्तदवच्छेदेना प्रामाण्यं साधनीयम् , तच्च न सम्भवति, सकलसहकारिसमवहिते व्यापारविशिष्टे पक्षे उक्तहेतोरंशतो ऽसिद्धेरिति समाधत्ते (आकांक्षेति) "आकांक्षादिमतः" – आकांक्षाज्ञानादिरूप सहकारि समवहितस्य । "प्रमाणत्वेन" – प्रमोपधान प्रयोजकत्वेन, "तत्सत्वे"–तादृशस्य शब्दस्य तज्ज्ञानस्यवा सत्त्वे (प्रमोत्पत्तेरावश्यकत्वादिति) न चाकांक्षाज्ञानादिविशिष्टशब्दादि व्यापाराधिकरण क्षणानन्तरक्षणे फलोत्पत्ते रावश्यकत्वेपि यद्व्यक्तेः कारणत्व मभिमतं सह कार्यन्तरशून्यो य स्तस्य तद्व्यापारस्यवा धिकरणक्षण स्तदुत्तरक्षणे फलानुत्पत्त्या स्वाधिकरण क्षणाव्यवहितोत्तरकालत्व व्यापकफलोत्पत्ति कत्वरूपफलायोगव्यवच्छेद स्तत्र दुर्घट एवेत्यत आह (अतथेति) यत्पूर्वक्षणे नसहकारिसमवधानं तदाफलानुपधायकत्वस्य प्रत्यक्षाद्युपधायकचक्षुरादिव्यक्ति च्छेदाद्युपधायक घात्यादिव्यक्ति साधारणतया कारणत्वा विरोधादित्यर्थः ।

## तथापि शब्दो नप्रमाणान्तरं,

---

तथाचायमाशयः । निरुक्तरूपफलायोग व्यवच्छेदो नकरणता घटकः, अपितु यावत्सहकारिसमवहित स्वव्यापाराधिकरणक्षणाव्यव हितोत्तरकालाव च्छिन्नफलोत्पत्तिकत्व रूपएव । अन्यथा-इन्द्रियादेरप्य करणत्वापत्तेः । यदि च सौगतमते सन्मात्रस्य क्षणिकतया फलोपधायक स्य चक्षुरादे स्तद्व्यापारस्यवा ऽप्यदासत्त्वा त्फलोत्पत्तिनियत स्वाधि करणक्षणाव्यवहितोत्तरकालाव च्छिन्नफलोत्पत्तिकत्व मव्याहतम् , तदा तेषां शब्दादेरपि तथात्वात् न कथं करणत्वमिति समस्तमाधिः ।

निरुक्तफलायोगव्यवच्छेदस्य कर्मादिकारकसाधारण्येपि नक्षतिः, व्यपदेशसंकरे स्तूपाधिभेदेन करणादिकारकभेदात् । नचैवं करणत्वमस्तु, किं फलायोग व्यवच्छेदेनेति वाच्यं, इन्द्रिय-त्वादिना चक्षुरादे स्स्पार्शनादिस्वरूपयोग्यत्वेपि चक्षुषास्पृशतीत्याद्य प्रयोगात् , अन्धेस्पृशतीत्याद्य प्रयोगाच्च । अथैवमपि फलोपधायकत्व मेवकरणत्वमस्तु, किं फलायोगव्यवच्छेदानुसरणेन, फलोपधायक मात्रएव फलायोगव्यवच्छेदसत्त्वात् ; इति चेत् ? सत्यं, तादृशापर्य वसितार्थएव फलायोगव्यवच्छिन्नं कारणमित्यस्य तात्पर्यम् । वस्तु तस्तु कर्मादिव्यावृत्तो यद्व्यापारः कारकान्तरव्यापाराव्यवधानेन फल निष्पादकस्तत्वं करणत्वं । अत एव पुरुषेण च्छिनत्ति कुठारइत्यादयो न प्रयोगाः । हस्तव्यापार्यकुठारादे र्यत्र करणत्वं तत्र हस्तेन च्छिन त्तीत्यादयः प्रयोगास्तु न मुख्या इत्यवधेयम् ।

शब्दस्यानुमानान्तर्भाववादी वैशेषिकः प्रत्यवतिष्ठते ( तथापीति ) शब्दस्य प्रमाणत्वेपि नासौ स्वविषयकप्रत्यक्षभिन्ना या अनुमितिरन्या

पदार्थ संसर्गस्यानुमानादेव सिद्धेः ।

---

प्रमिति स्तत्करणमित्यर्थः । "नप्रमाणान्तर" मित्यस्य नानुमानभिन्नमिति नार्थः, ज्ञायमानलिङ्गस्य करणतामतेऽनुमानभेदाप्रसिद्धेः । अनुमान तादात्म्यस्य साध्यत्वेपि सिद्धसाधनं, न्यायमतेपि शब्दस्यालिङ्गत्वात् । उक्तसाध्ये तत्वे साधकाभावादिति हेतूक्तः ।

ननु आकांक्षादिमत्पदद्वयोपस्थापितयोः पदार्थयोः पूर्वाप्रतीत परस्य प्रमाणान्तरत्वं सेत्स्यतीत्यत आह ( पदार्थसंसर्गस्येति ) एतेन मूलोक्तसाध्ये अनुमानादेव सिद्धेरित्यस्य हेतो वैयधिकरण्येपि नक्षतिः ।

मिश्रास्तु " नप्रमाणान्तर " मित्यस्य क्लृप्त प्रमाणान्तर्भूतमित्यर्थः, तत्वंचोभयवादिसिद्ध स्वकरणकप्रमासामान्यकत्वं । अत्रैव साध्ये हेतुः " पदार्थसंसर्गस्ये " त्यादिः । तदर्थश्चानुमान साध्यार्थकत्वादिति । अनुमितिसामग्र्यधीन स्वकरणक प्रत्यक्षान्यप्रमिति सामान्यकत्वादिति यावत् । अथवा अनुमानत्वेनैव संसर्गसाधकत्वादित्यर्थः । स्वनिष्ठ प्रत्यक्षान्यप्रमितिकरणतात्व व्यापकानुमितिकरणतात्व कत्वादिति यावत् । अखण्डाभावघटकतया नव्यभिचारावारक प्रत्यक्षान्यत्व विशेषण वैयर्थ्यमिति वर्णयन्ति । तच्चिन्त्यं, तादृशहेतोर्नैयायिका सिद्धत्वात् । यद्यपि प्रमाणान्तरत्वे साधकाभावोपि प्रमाणान्तरत्वबाध सिद्धिः, तथापि साधकमव्यवस्थाप्य तदभावासिद्ध्युपन्यासेन वादिनिरोधो शक्य इति नदोषः ।

ननु गामभ्याजेत्यादि वाक्यज्ञानं यत्र वर्तते कर्मत्वाभ्या जनादि पदार्थे गोकर्मत्वादिपदार्थसंसर्गस्तत्र तत्संसर्गव्याप्यधर्मवत्ताज्ञानमन्तरेण नानुमातुं शक्यते, तादृशवाक्यज्ञानं विनापि संसर्गसिद्धिस्सम्भवतीति वाक्यज्ञानम किंचित्करमिति वाक्यार्थज्ञानस्य वाक्यज्ञानान्वयव्यति रेकानुविधान मनुभवसिद्धं शब्दस्य प्रमाणान्तरत्व मन्तरेण नोप

तथाहि-गामभ्याज दण्डेनेति पदानि वैदिकपदानि
वा तात्पर्य विषयस्मारित संसर्ग ज्ञानपूर्वकाणि,

---

पद्यते; नच साध्यपक्षज्ञानसम्पादकत्वेन सन्निकृष्टार्थवाक्यस्यानु
मानोपयोग इति वाच्यम् , आकांक्षादिरहितपदसमूहज्ञाने ऽपि सा-
ध्याद्युपस्थितिसम्भवेन कांक्षादिमत्पदसमूहादिरूपवाक्यज्ञानान्वय
व्यतिरेकानुविधानानुपपत्ते दुर्वारत्वा, दित्याशंक्य; श्रोतु रेकपदार्थे
परपदार्थसंसर्गानुमापकस्य वाक्यज्ञानसापेक्षत्वस्य लिंगस्य निय
मतो न सम्भव इति वाक्यविशेषे आकांक्षादिघटित तद्विशेषत्वेन
हेतुता, वक्तृवाक्यार्थज्ञानपूर्वकत्तानुमानमेव वाक्यार्थप्रतीत्यनुरोधेनोप
गन्तव्यम् , अत आकांक्षादिमत्त्वेन वाक्यज्ञान मनुमानोपयोगि,
वाक्यार्थज्ञानोपरक्तज्ञानसिद्धावेव च वाक्यार्थसिद्धि रित्याह (तथा
हीति) लौकिकवाक्यस्थले वक्तृवाक्यार्थज्ञानानुमानेन वाक्यार्थ
सिद्ध्या तदेवाप्रमाणं, वेदास्तु प्रमाणान्येवेति मीमांसका
उपगच्छन्ति, तन्मता देतन्मतस्य विशेषं दर्शयितुं वेदवाक्यान्यपि
पक्षतया निर्दिशति (वैदिकेति) एवं च मीमांसकमते वेदस्यापौरु
षेयतया तत्र वक्तृज्ञानानुमानासम्भवेन वेदस्य प्रमाणान्तरता ।
एतन्मतेतु तत्रापि वक्तु र्भगवतो वा वाक्यार्थज्ञानानुमानेन वा
क्यार्थसिद्धिसम्भवात वेदस्यापि नप्रमाणान्तरत्वेति विशेषो लभ्यते ।
(तात्पर्येति) स्वतात्पर्यविषयो यः स्वघटकपरस्पराकांक्षादिमत्पद
स्मारितार्थयोः परस्परसंसर्ग स्तज्ज्ञानपूर्वकाणीत्यर्थः । गामभ्याजे
त्यादिवाक्ये तद्घटकं यत्परस्पराकांक्षादिमद्गोपदद्वितीयापदादिकं
तत्तदर्थयो र्मिथस्संसर्गस्याधाराधेयभावादे र्ज्ञानपूर्वकत्वासिद्ध्या भिमत
सिद्धिः । अतात्पर्यविषयस्य गोकर्मत्वादे रेककालीनत्वादिसंसर्गस्या
भ्याजनकृत्यादे श्च कार्यकारणविषयविषयिभावादिसम्बन्धस्यै कत्र
तात्पर्ये परस्य सिद्धे र्वारणाय स्वतात्पर्यविषयत्वं संसर्गविशेषणम् ।

नच तात्पर्याविषयसंसर्गसिद्धावपि तात्पर्यविषयतत्सिद्धौ बाधका भावा दभिमतसिद्धेः किं तात्पर्यविषयत्वविशेषणेनेति वाच्यम्, न्याय मते तात्पर्याविषयसंसर्गसिद्धे श्शब्दा दनुत्पत्त्या तत्साम्याय तादृश विशेषणोपादानात् । स्वतात्पर्यविषयत्वं च तज्जन्यबोधविषयत्वेन प्रतिपादकेच्छाविषयत्वं, न्यायमते तात्पर्यविषयस्या प्रकृतवाक्यस्थपद स्मारितार्थसंसर्गस्या सिद्धया प्रकृतानुमानादपि तादृशसंसर्गसिद्धि वारणाय स्वघटकपदस्मारितार्थ प्रतियोगिकत्वं संसर्गविशेषणं । प्रकृत वाक्यस्थयो रपि ययोः पदयो र्नाकांक्षासत्ति वा तत्पदद्वयार्थयोरपि तात्पर्यविषयसंसर्गस्यासिद्धया तत्सिद्धिवारणाय परस्पराकांक्षादिमत्त्वं पदविशेषणम् । नच प्रकृतवाक्यघटकगवादिपदयो र्मिथस्साकांक्षयो यावर्थौ तयो राधाराधेयभावरूपाकांक्षानिरूपकसम्बन्ध एव न्याय मते भासते, नतु तात्पर्यविषयोऽपि तत्तत्पदाकांक्षादिनिरूपकैककालीनत्वा दिसंसर्ग इति वैशेषिकमते उक्तानुमाना त्कथं तद्भाननिर्वाह इति वा- च्यम्; स्वघटकपदद्वयाकांक्षानिरूपकत्वस्य संसर्गविशेषणतयोपपत्तेः । वस्तुतः यत्संसर्गनिरूपित परस्पराकांक्षादिमत्पदद्वयघटितं यद्वाक्यं तत्पदद्वयार्थयो र्मिथस्तत्संसर्गज्ञानपूर्वकमिति सामान्यव्याप्तयादरा त्साध्ये आकांक्षादिमत्त्वं न प्रवेश्यं, हेतुस्थयत्पदीय यदर्थ घटितहेतौ पक्षधर्मता ज्ञानं साध्यस्थ तत्पदीय तदर्थघटितसाध्यस्यैव पक्षधर्मताबलेन सामान्यमुख व्याप्तितः सिद्धिनियमात् ययोः पदयोर्नाकांक्षादिकं तयो र्हेतुघटकतया उक्तातिप्रसंगा नवकाशात् । एवं स्वघटकपदद्वय घटितत्वरूप हेतु सत्त्वेन हेतुस्थयत्पदेन तदुपादानासम्भवात् उक्तरीत्याति प्रसंगशंका नवकाशात् । यद्यपि साध्ये तात्पर्यप्रवेशनमप्यफलं, तत्र वेशेऽपि हेतौ तात्पर्यनिवेशस्यावश्यकतया यत्संसर्गपर पदद्वयघटितं यद्वाक्यं स तत्संसर्गज्ञानपूर्वकमिति सामान्यव्याप्तया पक्षधर्मताबलात् तात्पर्यविषय संसर्गमात्र सिद्धिसम्भवात्; तथापि पक्षधर्मताबला तात्पर्यविषयीय स्वसंसर्ग स्वज्ञानपूर्वकत्वमेव सिद्ध्यतीति प्रदर्शनार्थं

मेव संसर्गे मूलकृत स्तात्पर्यविषयत्वोत्कीर्तनं, नतु तस्य साध्यघटकत्वं तदभिप्रेतमिति न विरोधः । अर्थयोर्वृत्त्यापदस्मारितत्वकाभावप्रवा, तेन समवायादिनासम्बन्धेन पदस्मारितस्याकाशादे स्संसर्गस्यतात्पर्यविषयत्वेपि न सिद्धिः । तत्पदस्मारितार्थे तत्पदतात्पर्यमपि निवेश्यम् , अन्यथा गामभ्याजेत्यादौ गोपदार्थसंसर्गत्वादिना यत्र गवादिपदस्मारित पृथिव्यादिसम्बन्धस्यापि वक्तृतात्पर्यविषयता गवादिपदतात्पर्यं विशेषतः पशुविशेषादावेव तत्र पृथिव्यादिसंसर्गसिद्धिप्रसंगात् । धूमपदाद्धूमज्ञाने ऽनुमानाद्वह्निधीर्भविष्यतीत्यभिसन्धाय यत्र धूमोस्तीतिवाक्यमुच्चरितं तत्र धूमपदेनलक्षणयावह्नेस्स्मारितत्वेपि न प्रथमतोवह्निसंसर्गधीः, स्वजन्यबोधविषयत्व प्रकारकेच्छारूप स्वतात्पर्यनिवेशात् , वक्ततात्पर्यस्य वह्निबोधांशे धूमपद टायोज्यत्वस्यैव भानाद्वह्नेस्तद्विषयत्वेपि अतिप्रसंगविरहात । अथ पदार्थसंसर्गेष तात्पर्यविशेषणप्रवेशेपि यत्रात्याजस्य मुख्यार्थकृतौ अभ्याजनरूपधात्वर्थस्य विषयितारूपसंसर्गे लक्ष्यार्थसंयोगादिरूपव्यापारेच तस्यानुकूलतारूपसंसर्गेतात्पर्यं, तत्र कृतावभ्याजनस्यानुकूलतासम्बन्धः कथं न सिद्ध्यति, अभ्याजनकृत्योः पदार्थयोरनुकूलतासंसर्गस्य च तात्पर्यविषयत्वात ; नच तत्र कृतिनिष्ठानुकूलतायस्य तात्पर्याविषयत्वात्ततत्सिद्धिरितिवाच्यम् , अनुकूलतासंसर्गस्य व्यापारांशे बोधोभवत्वित्यभिप्रायेण सामान्यतः कृतिनिष्ठानुकूलताया अपिभानात ; एवं यत्र गोरानयनमित्यादौ गोपदार्थे पशुविशेषीयत्वेन षष्ठ्यर्थकर्मत्वांशे संसर्गप्रतीति र्भवतु गोपदार्थेषु प्रतियोगित्वेन षष्ठ्यर्थसम्बन्धांशे संसर्गप्रतीति र्भवत्वित्याकाराभिप्रायः , तत्रेष्वादि प्रतियोगिक कर्मत्वानुयोगिक संसर्ग सिद्धिप्रसंगश्च , इष्वादेः कर्मत्वादेश्च पदार्थस्य सामान्यत स्तत्संसर्गस्यच तात्पर्य विषयत्वात्; इति चेत्? सत्यं, तत्पदार्थ संसर्गयोः पृथ क्तात्पर्यविषयत्वविशेषणे नैतादृशातिप्रसंग वारणसम्भव इति तत्पदस्मारित यद्यदर्थ प्रतियोग्य नुयोगिकत्वेन यत्संसर्ग

आकांक्षादिमत्पद कदम्बत्वात्,

---

बोधोऽभिप्रेतः तत्प्रतियोगिक तदनुयोगिकतत्संसर्ग ज्ञानपूर्वकाणीत्येव साध्यं विवक्षणीयं, तथाचति च नोक्तातिप्रसंगः, सामान्य व्याप्यव्यापकधर्मतावच्छेन च पूर्वानुपस्थित तत्तत्पदार्थ प्रतियोग्य नुयोगिक तत्संसर्गक वाक्यार्थ घटितोक्तसाध्य सिद्धेरप्यसम्भवः । एवञ्च विशिष्य वाक्यार्थसिद्ध्या प्रवर्तकज्ञाननिर्वाहोऽपि उक्तानुमानाद्भवति । एवंच सिद्धान्ते 'स्मारितपदार्थ संसर्ग ज्ञानपूर्वकाणी' ति अनुमिति स्वपादित्यनेन प्रवर्तक ज्ञानानिर्वाह कथन तत्सामान्यव्याप्यया प्रसिद्ध विशेषधी नंभवतीत्याशयेन । प्रवर्तक ज्ञाननिर्वाहकथनंच दर्शितातिप्रसंग वारणा निर्वाहस्य व्युत्पंक्षणम् । अत्र स्वप्रतियोगित्वा नुयोगित्वाभ्यां तत्तत्पदवोध्यत्वेन यो भिप्रायः तद्विषय तत्तत्पद स्मारितार्थ प्रतियोगिकोपि संसर्ग स्तज्ज्ञानपूर्वकाणीत्येव साधनीयमिति नोक्तातिप्रसंगइति वाच्यम्, तत्रापि साध्य घटक संसर्गे स्वत्व निवेशेनाननुगमेन तादृशानुमाना निर्वाहात्। वाक्यान्तर घटक पदद्वय तात्पर्य विषयस्य प्रकृत वाक्यघटक परस्परा कांक्षारहित पदद्वय तात्पर्यविषयस्य च संसर्गस्य सिद्धिवारणाय यत्तत्पदार्थयो स्संसर्गसिद्धि रुद्देश्या तत्पदयो विशिष्य साध्यहेत्वो रुदरपनिवेशनीय तथा सामान्यव्याप्यया अप्रसिद्ध विशेष सिद्धि स्वीकार मन्तरेणा निर्वाहाच्च । ( आकांक्षादिमदिति ) परस्पराकांक्षासत्तियोग्यताव त्प दद्वय घटितत्वादित्यर्थः । निराकांक्षायोग्यपदद्वय घटितवाक्ये योग्यताघटितवाक्ये योग्यताघटित हेत्वभावेपि योग्यानिराकांक्षवाक्ये पू र्वोक्तदिशा साध्ये आकांक्षाप्रवेशेन शुकवाक्यादृश परमेश्वरीय संसर्ग प्रमापूर्वकत्व सत्त्वेपि व्यभिचारो दुर्वारइति हेतौ आकांक्षाप्रवेशः । यदिच साध्ये आकांक्षाप्रवेशेन सामान्यव्याप्यतोक्तातिप्रसंगो वार्यते, तदा व्यभिचाराभावेपि निराकांक्षपदयो र्हेतुघटकत्वे प्रकृतस्थले ग-

वादिपद दर्शनादि पदार्थयो स्संसर्ग सिद्धिमसंभवति तद्वारणायमि यस्साकांक्षपदघटितं यद्वाक्यमिति हेतौ निवेशस्यावश्यकतया है तावाकांक्षा निवेशस्यावश्यकता ।

मिश्रास्तु संसर्गतात्पर्यरहिते निराकांक्षे तात्पर्यघटितसाध्याभावेन व्यभिचारवारणाय हेतौ आकांक्षाप्रवेशनमावश्यकम् । न च सर्वत्र योग्यनिराकांक्षेऽभ्रमवतएव तात्पर्यं संसर्गप्रमोत्पादाय साध्यसत्त्वमुपपा- दयितुं शक्यते, अबोधकेनिराकांक्षे तद्वाक्यजन्यत्वेन संसर्गबोधविषयके वक्तात्पतात्पर्यस्य भ्रमवतोऽसम्भवात् ; तदिच्छाया व्यधिकरणा प्रकार त्वात् । अथ शुकवाक्ये आकांक्षादिसत्त्वेऽपि तात्पर्यगर्भसाध्याभावेन व्य- भिचारस्य दुर्वारतया हेतौ तात्पर्यप्रवेशावश्यकतया नोक्तव्यभिचारस्या- वकाशः । न च शुकवाक्ये व्यभिचारवारणायसामान्यतः किञ्चि दर्थपरत्वमेवनिवेश्यं, अतः पदार्थस्वरूपपरमिव स्संसर्गतात्पर्यशून्ये नि- राकांक्षे व्यभिचारवारणायाकांक्षा निवेशनमिति वाच्यम् ; पदार्थस्वरू- पपर संसर्गतात्पर्यरहितसाकांक्ष वाक्यस्यापिसम्भवात् , तत्र व्यभिचा- रवारणाय संसर्गतात्पर्यस्यापि हेतौ निवेशनीयतयाऽऽकांक्षायाः अनिवे- शेऽप्युक्त व्यभिचारानवकाशादिति चेन्न, — संसर्गतात्पर्यस्यैवाकांक्षा पदेन विवक्षितत्वादित्याहुः ।

नचैवं घटम्पटे योग्यताविरहेसति संसृष्टार्थपरत्वादिति लीलावतीकारीय हेत्वविशेषः, तत्रान्वयप्रयोजकरूपवत्त्वात्मक योग्य- ताया निवेशात् । अत्र च बाधकप्रमाणाभावरूपाया स्तस्यानिवेशेन विशेषात् ।

नन्वेवं घटः कर्मत्वमानयनंकृति रित्यादावप्युक्तहेतुना संसर्ग सिद्धिसम्भवात् तद्व्यावृत्तये आकांक्षाया आनुमानिकवाक्यार्थबोधे- सापेक्षता नस्यादितिवाच्यम् , परस्परसाकांक्षपदयोः परस्परस्वार्थ संसर्गतात्पर्येण बुबोधयिषुणा प्रयोगा दाकांक्षाया स्संसर्गतात्पर्यग्राहक- त्वेन प्रकृतानुमानोपयोग निर्वाहात् ।

व्याप्ति ग्रहपरिपन्थि व्यभिचार ज्ञानेनाशक्यत्वात् इति , परास्तम् -
प्रतिबन्धक समवहिताकांक्षा ज्ञानविषय वाक्यस्यापि स्वरूपयोग्य
त्वेन स्वप्रतिपाद्यत्व प्रविष्टया टक व्यभिचारानवकाशादिति । तदसत् ,
स्वरूपयोग्यत्वस्य प्रतिपाद्यताघटकत्वे पदार्थान्तर संसर्ग व्यावर्तना
सम्भवात् । पदार्थपदस्य प्रकृत पदार्थ परत्वा भ्युपगम्यैव तस्य व्यावर्त
नीयत्वात् । यदिच हेतु विशेषण सार्थकतायैव स्वरूपयोग्यक
प्रतीतिविषयत्वरूप प्रतिपाद्यत्वं साध्ये निवेश्यते तदा संसर्ग प्रति
पादकत्व साध्यस्य पर्यवसानादिति " यद्विध " इत्यादिमूलेनतादृश
साध्य दूषणाविरोधइतिदिक् '

आदिपदेना सत्तियोग्यतयोः परिग्रहः । आसत्तिर व्य
वधानेनान्वय प्रतियोग्युपस्थापकत्वं, तदुपादानाद् नासत्रयो
राकांक्षादि मत्पदयो रासत्ति गर्भसाध्याभावेन स्वातन्त्र्येणा सत्त
स्साध्यघटकत्वेपि हेतु विशेषण सार्थक्यानुरोधेन गिरिर्भुक्तमग्निमान्
इत्यादौ व्यवधानेनोपस्थितयो गिर्यग्निमत्पदयो स्तात्पर्यविषयस्यापि
सम्बन्धस्य न्यायमतेशाब्दबोधाविषयस्य सिद्धिवारणाय वा स्मारित-
त्वस्या व्यवधानेन स्मारितत्वरूपस्य विवक्षणीयतया तद्गर्भसाध्याभा-
वेन प्रसक्तस्य व्यभिचारस्य नावकाशः । वृत्त्या पदस्मारितत्वमासत्तिः,
तदनिवेशे वृत्त्यार्थास्मारके वृत्त्यास्मारितत्व गर्भसाध्याभावेन व्यभि-
चारस्स्यादिति तन्निवेशइतिकेचित । योग्यताया अनिवेशे ऽ योग्यस्थले
एकपदार्थ प्रतियोगिकापरपदार्थानुयोगिकसंसर्गाप्रसिद्ध्या तद्घटित
साध्याप्रसत्त्वाद्व्यभिचारइति तत्रतन्निवेशः । योग्यताच विशिष्यएकपदे
अपरपदस्य यत्पदार्थप्रतियोगिकत्व स्वार्थानुयोगिकत्व बाधकप्रमाणा
भाव स्तत्संसर्गकत्वम् । एवंच स्वघटकीभूत गवामादिपदाकांक्षा
निरूपक गवात्ममादिपदस्मारितार्थ प्रतियोग्यनुयोगिकत्वबाधक प्रमा-
णाभाववत्पदस्मारितार्थप्रतियोग्यनुयोगिकत्व बुबोधयिषा, विषय-
संसर्गकत्वं हेतुः फलितः । निरूपकान्तं प्रमाणाभाववद्न्तं च

संसर्गविशेषणम् । तादृशाद्विविधपदाकाङ्क्षानिरूपक तत्तत्पदस्मारितार्थ प्रतियोग्यनुयोगिकत्व शुबोधयिषाविषयतत्तत्पदस्मारितार्थ प्रतियोग्यनुयोगिकसंसर्गज्ञानपूर्वकार्थपक्षधर्मतावच्छेदकं प्रकृते साध्यम् । तादृशं मत्वैव यत्तत्पदाभ्यां निवेश्य सामान्यव्याप्ति रादर्शिता, न तु विशिष्य, तेन न घट मानयेत्यादिवाक्यस्य दृष्टान्तत्वानिर्वाहः । तथा साध्यप्रसिद्धिमात्रेण कृतकृत्यता ।

एतेन घटः कर्मत्वमित्यादिपदद्वयस्याप्यभेदान्वये . साकाङ्क्षतया भेदान्वये योग्यतया च हेतुसत्त्वा त्तत्पदद्वयाकाङ्क्षानिरूपक तत्तत्पदार्थप्रतियोग्यनुयोगिकसंसर्गाप्रसिद्ध्या साध्यासत्त्वेन व्यभिचारः, एवं वह्निना सिञ्चतीत्यादौ लक्षणादिना वह्न्यादिपदस्मारितजलादिनिरूपित तात्पर्यविषयसंसर्गघटितयोग्यतासत्त्वात् वह्न्यादिसंसर्गतात्पर्यसत्त्वात् च हेतुमत्त्वेन तात्पर्यविषयवह्निकरणत्वादि प्रतियोग्यनुयोगिक संसर्गाप्रसिद्ध्या साध्यासत्त्वेन व्यभिचारः, एवं तत्रैव स्मारितार्थान्तर प्रतियोगिक तात्पर्यविषय संसर्गघटित योग्यतासत्त्वेन तात्पर्यविषय स्मारितार्थ संसर्गघटित साध्यासत्त्वेन व्यभिचार इति निरस्तं; प्रथमे आकाङ्क्षानिरूपक संसर्गस्य योग्यता घटकतया व्यव तात्पर्यविषयसंसर्गस्य तथात्वेन स्मारितार्थ प्रतियोगिकतात्पर्य विषयसंसर्गस्यैव तथात्वेन दर्शित निष्कृष्टहेतु सत्त्वात् ।

गवामादिपद स्मारितगोकर्मत्वादिसंसर्गस्य यत्र तदर्थप्रतियोग्यनुयोगिकत्वेन न शुबोधयिषितत्वम्, अपि तु तादृशपदस्मारितार्थान्तरप्रतियोग्यनुयोगिकत्वेनैव, तत्र गोकर्मत्वादिप्रतियोग्यनुयोगिकत्वेन तात्संसर्गसिद्धिवारणाय साध्यघटकशुबोधयिषायां तत्तत्पदस्मारितार्थप्रतियोग्यनुयोगिकत्वावगाहित्वं निवेशितम् । संसर्गे तत्तत्पदार्थप्रतियोगिकत्वाद्यभावे प्रवर्तकज्ञानानिर्वाह इति तत्र वह्निके

घटमानयेति[पद]वत। योग्यतासत्तिमत्त्वेसति संसृष्टार्थ परत्वात, तत्परसन्निधिमत्त्वाद्वेतिन हेतुः; संसृष्टोहि योर्थस्तत्परत्वं तत्परसन्निधिमत्त्वंवा असिद्धं,

---

प्रवेशः । ( घट मानयेति [ पद ] वदिति ) नच तादृशवाक्येऽपि संसर्गज्ञानपूर्वकत्व मीदृशानुमानान्तरेण ग्राह्यं, तदनुमानदृष्टान्तेऽप्यनुमानान्तरेणैवेत्यनवस्थेति वाच्यम् ; तादृशानवस्थाया इष्टत्वात् । अविरलतदनुमानपरम्पराया एवाभिष्टत्वात्, तस्यास्तु सुषुप्त्यादिना विच्छेदेन बाधितत्वात् । दृष्टान्ते कालान्तरानुमित साध्यस्यैवानुमाननिर्वाहिका विरलानुमितिपरम्परायाः प्रकृतेन पेक्षणात् । ईदृशानुमानं विनापि स्ववाक्ये अनुव्यवसायोपस्थितस्वीयवाक्यार्थज्ञानपूर्वकत्वस्य सुग्रहतया तस्य दृष्टान्ततया प्युपपत्तेः । वस्तुतस्त्वे लीलावतीकारीय हेतुद्वयं दूषयति ( योग्यतासत्तीत्यादि ) ( संसृष्टेति ) संसृष्टार्थपरत्वं एकपदार्थ स्यान्यपदार्थे संसर्गं प्रतीतीच्छयो च्चरितत्वं , नत्वेकपदार्थं संसर्गवदपरपदार्थं प्रतीतीच्छयोच्चरितत्वमित्याशयेन योग्यतोपादानं । अन्यथा एकपदार्थ संसर्गवदपरपदार्थस्यायोग्यत्वके प्रसिद्ध्या विशेष्यदलासत्त्वेनैव व्यभिचारवारणे नैतद्वैयर्थ्यापातात् । संसृष्टोहियोर्थ इत्यादिदूषणाभिधानं त्वाशयास्फुटतया । विहायायोग्यत्वाघटित द्वितीयहेतौ च तत्परत्वं संसृष्टोयोर्थस्तत्परत्वमेव, अतो योग्यता तत्र नोपात्ता । तत्र च तादृशविशेषण मात्रापायबोधे नैवोपयधेयम् । (तत्परेति) संसृष्टार्थपरत्वे सत्यासत्तिमत्त्वादित्यर्थः ( संसृष्टोहीति ) संसृष्टोर्थ इत्यस्य एकपदार्थसंसृष्टोपरपदार्थ इत्यर्थः । ''असिद्धं''-अनुमानात्पूर्वमनिश्चितम् । तथा च पक्षे हेतुतावच्छेदक

संसर्गस्य प्रागप्रतीतेः ।

संसृष्टत्व प्रकारकप्रतीतिपरत्वं तत्प्रकारक प्रतीतिपर सन्निधिमत्त्वंवा अनाप्तोक्ते निराकांक्षेच व्यभिचारि । संसर्गस्य बहुप्रकारत्वेपि नानाभिमत संसर्गसिद्धिः,

---

विशिष्टहेतुमत्तानिश्चयाभावाद नुमित्यनुपपत्तिरितिभावः । ( संसर्गस्येति ) " संसर्गस्य "- तादृशहेतुघटकस्यैकपदार्थे अपरपदार्थसंसर्गस्य । "प्राग· प्रतीतेः"- अनुमानात्पूर्वमनिश्चयात ।

यद्यपि स्वोक्तहेतुघटकबाधक मानाभावरूपयोग्यताया अपि वाक्या र्थवदनिश्चयात्तु ल्योनुयोगः, तथापि वाक्यार्थीभूतसंसर्गस्य पूर्वनिश्चयोप गमे ततएवानुमानकार्यनिर्वाहा दनुमानवैयर्थ्यमिति तदुपगमासम्भवः; बाधकप्रमाणाभावरूप योग्यताया निश्चयोपगमेतु न तथेति विशेषः । तन्निश्चयस्याप्यसम्भवेनोपगमासम्भवइति स्वीयहेतावपि दूषणं पुन· रग्रेवक्ष्यते । प्रथमहेतौ योग्यतोपादानवैयर्थ्यमपि बोध्यम् ।

ननु एकपदार्थे अपरपदार्थसंसर्गवत्त्वं न हेतुघटकं, येनोक्तदो· षस्स्यात्, किन्तु तात्पर्यघटके प्रतीति विशेषणतयैव पदार्थसंसर्गस्य हेतुघटकतेत्याशंक्य दूषणान्तरमाह ( संसृष्टत्वेति ) एकपदार्थे अपर पदार्थप्रकारकसंसर्गप्रतीतिच्छयोच्चारितत्वमित्यर्थः । " तत्परसन्नि· धिमत्त्व"- तादृशप्रतीतिच्छयोच्चरितत्वेसति आसत्तिमत्त्वम् । " अना- प्तोक्ते "- अयोग्यवाक्ये । नच तत्र योग्यताघटित प्रथमहेतौव्यभि· चारइति वाच्यम् ; स्थिरजलाभिप्रायप्रयुक्ते पयसासिञ्चतीत्ययोग्य- वाक्ये तन्मतसिद्धान्वय प्रयोजकरूपवत्त्वात्मक योग्यतासत्त्वेन व्यभि· चारात । तात्पर्यनिवेशन प्रयोजन दर्शयति ( संसर्गस्येति ) प्रकृत वाक्यघटकपदोपस्थापितार्थसंसर्गस्य, " बहुप्रकारत्वेपि "- तात्पर्यविषय

तस्य तात्पर्याविषयत्वात् । अन्यथा शब्दादप्य भिमतान्वय बोधो नस्यात् ॥

अत एव विशेषणविशेष्यमात्र वदर्थकानि,

---

त्तया विषयभेदेन नानाविधत्वेऽपि । "नानभिमतसंसर्गसिद्धिः" -न तात्पर्याविषयसंसर्गसिद्धिः । "तस्य"-तात्पर्याविषयसंसर्गस्य । "तात्पर्याविषयत्वात्"-तात्पर्यविषयतात्मक विशेषणाभावेन यथोक्तसाध्ये अप्रवेशात् ।

केचित्तु प्रकृतपदार्थसंसर्गस्य प्रकृतशब्दजन्यबोधविषयतया नैयायिकाभिमत तदनभिमतभेदेनानेकविधत्वेऽपि न शाब्दबोधविषयतया नैयायिकानभिमतसंसर्गसिद्धिः, तस्य तात्पर्याविषयत्व नियतत्वात् , इति व्याचक्रुः ।

ननु तात्पर्यस्य संसर्गविशेषणत्वे तज्ज्ञानापेक्षाया आवश्यकत्वेन तज्ज्ञानशून्यदशायां संसर्गासिद्धिप्रसंग इत्यत आह ( अन्यथेति ) "अन्यथा"-तात्पर्याभावस्य संसर्गाभावाप्रयोजकत्वे ( शब्दादपीति ) न्यायमतेऽपि शब्दादित्यर्थः । "अभिमतान्वयबोधः"-तात्पर्याविषयसंसर्गाविषयकसंसर्गबोधः । ( नस्यादिति )तथाच तात्पर्याभावस्य संसर्गाभाव प्रयोजकत्व मुभयमतएव, परन्तुन्यायमते तात्पर्य ज्ञानस्य स्वतन्त्रहेतुतया वैशेषिकमते साध्यहेतु ज्ञानसम्पादकतयेति तज्ज्ञान विरहदशायां नकस्यापि मते संसर्गबोध इतिभावः । केचित्तु साध्यशरीरे संसर्ग संसर्गविधयैव प्रवेशयन्ति, तन्मते संसर्ग तात्पर्यविशेषण प्रवेशो न सम्भवति, तेन रूपेण संसर्गताया अप्रामाणिकत्वादिति तन्मतं अनभिमत संसर्ग सिद्धिप्रसंगेनैव निराकुरुते ( अतएवेति ) तात्पर्याविषय संसर्ग सिद्धि प्रसंगादेवेत्यर्थः । ( विशेष्यमात्रवदर्थकानीति )

तद्बोधपूर्वकाणिवेति न साध्यम ॥

यत्तु स्मारितार्थे संसर्गवन्तीति साध्यं, मत्वर्थश्च लिंगतया ज्ञापकत्वम् ,

---

अपरपदार्थविशेषितस्वार्थबोधकानीत्यर्थः । अपरपदार्थ वास्वार्थे बोधकानीतियावत् । विषयता विशेषस्वरूप विशेषण विशेष्यभावः साध्यघटकइति तु भ्रमः, विषयता विशेषेण विशेष्यस्यैव प्रवर्तक बोदेश्यत्वाद्विषयताविशेषस्य साध्यघटकतायां तदनिर्वाहात , तत्ताद्विषयकस्यैव बोधस्य सम्भवात्तस्य चानुदेश्यत्वात् ( तद्बोधपूर्व-काणीति ) तादृश स्वार्थबोध पूर्वकाणीत्यर्थः । अत्रच विशेष्य बोधकपदानामेव पक्षता, तदर्थेष्वेव विशेषणवत्त्व सिद्धेरुदेश्यत्वात , विशेषणवाचक पदनिरूपिताकांक्षादिमत्त्वं हेतुः, साध्यघटक संसर्गे संसर्ग धर्मभाने आकांक्षानिरूपकत्व निवेशासम्भवेन हेतावाकांक्षा निवेशवैयर्थ्य, आकांक्षाया अनिरूपकत्व काळीनत्वादि संसर्गस्य सिद्धिप्रसंग श्चेत्याधिकं दूषणम् । आचार्यीयं साध्यं दूषयितुमुपन्य-स्यति ( यत्त्विति ) ( स्मारितेति ) पदस्मारितार्थस्य तात्पर्य विषयो य स्संसर्ग स्तद्वन्तीत्यर्थः । ननु- अर्थधर्मस्य संसर्गवत्त्वस्य कथं पदपक्षकानुमानसाध्यते त्यत आह ( मत्वर्थश्चेति ) शब्दाप्रामाण्य वादिनये संसर्गज्ञानपूर्वकत्वं शब्देबाधितमिति तस्यापि तत्र साध-नासम्भव इत्याशंका निरासाय ( लिंगतयेति ) लिंगविधयेत्यर्थः । एतादृशंच ज्ञापकत्व मस्त्येव सर्वमत एव शब्दनिष्ठधर्मस्यैव तादा त्म्यसम्बन्धेन शब्दविशेषस्यापि स्वपक्षकानुमाने । लिंगतयेति न साध्यघटकं, अपितु स्वरूपकीर्तनमेव । तदनन्वभावेऽपि संसर्गज्ञापकत्व मात्रासिद्धे रुदेश्यतानिर्वाहात् , ज्ञापकत्व ज्ञानस्यानुदेश्यत्वेपि

नचान्योन्याश्रयः, पूर्वपूर्वानुमिति हेतुत्वेनाना
दित्वात् ।

---

साध्यस्य शब्दरूप पक्षसत्त्वनिर्वाहकतया साध्ये तदन्तर्भावोपगमात
उक्तानुमाने ज्ञानपूर्वकत्वा न्तर्भाववत् ।

ननु · अत्र दृष्टान्तभूत घटमानयेत्यादिवाक्ये संसर्ग ज्ञापकत्व
मनुमानेनैव साधनीयम् , संसर्गज्ञापकत्वानुमितेरेव संसर्गज्ञानरूपतया
तन्मते वाक्येन संसर्गानुमितावजनितायां वाक्ये संसर्गज्ञापकत्वस्य दुरु
पपादत्वात , तदनुमानेऽपि दृष्टान्तान्तरापेक्षणात तत्र तत्र पूर्व
वाक्यान्तरे संसर्गज्ञापकत्वानुमानापेक्षया नवस्थेतिप्रकृतवाक्यस्यैव
दृष्टान्ततोपगन्तव्या ; प्रकृतवाक्ये च तादृशसाध्यस्य प्रकृ-
तानुमानादेव सिद्धौ दृष्टान्तत्वानिर्वाहः तथाच अन्योन्याश्रयः, प्रकृतानु
माननिर्वाहक दृष्टान्तपक्षक प्रकृतसाध्यकानुमाने प्रकृतानुमानादेव
सिद्धौ दृष्टान्ततानिर्वाहः तथाचान्यस्य दृष्टान्तनिर्वाहकतया पेक्षितत्वा
दित्याशंकते ( नचेति ) प्रकृतवाक्यं न सत्पक्षकानुमाननिर्वाहक
दृष्टान्ते साध्यसाधनाय दृष्टान्तीकरणीयं, येनान्योन्याश्रय स्स्यात ,
अपितु तत्र पूर्वपूर्ववाक्यमेव, तत्तद्वाक्यपक्षकानुमानपरम्परायाः पूर्वाव
धिरहितस्वरूप मनवस्थितत्व मिष्टमेव, अविरळज्ञानपरम्पराया एव अनि
ष्टत्वात , प्रकृते चाविरळपरम्पराया अनपेक्षितत्वात , दृष्टान्ते साध्यसिद्धौ
दिनान्तरिततदधीनस्मरणेनापि प्रकृतानुमाननिर्वाहात , गत्यन्तरविरहे
जन्मान्तरीयसंस्कारस्यापि स्मारकतया तदुत्तरीयप्रथमानुमाननिर्वाहा
दिति समाधत्ते ( पूर्वपूर्वेति ) "पूर्वपूर्वा नुमिति हेतुत्वेन"-पूर्वपूर्व संसर्ग
ज्ञापकत्वानुमितिरूप संसर्गज्ञानहेतुत्वप्रसिद्ध्यपेक्षणेन । "अनादित्वात"-
पूर्वावधिरहितत्वरूपानादित्वस्येष्टत्वात । तथा च प्रकृतानुमानस्य
दृष्टान्ते साध्यापेक्षणीयता निबन्धनान्योन्याश्रय.नवकाश इति भावः ।
केचित्तु हेतुत्वेनेत्यन्तं अन्योन्याश्रयाभावे हेतुः । पूर्वपूर्वानुमिति
हेतुत्वात्मकसाध्यप्रसिद्धे रेवापेक्षणेनेत्यर्थः । नन्वेव मनवस्थेत्याशङ्क्याह
( अनादित्वादिति ) अनवस्थितत्वस्येष्टत्वा दित्येव तदर्थ इत्याहुः ।

तन्न, ज्ञापकत्व मात्रेणा र्थासिद्धेः । प्रमापकत्वे तेनैव व्यभिचारात् ।

---

अनादित्वादित्येवा न्योन्याश्रयाभावे हेतुः, प्रकृतानुमिति दृष्टान्ते साध्यसिद्धेरादावनपेक्षितत्वा दित्यर्थः । अत्र हेतुत्वेनेत्यन्तं, पूर्व पूर्वानुमितेरेव दृष्टान्तनिर्वाहकत्वेनेति तदर्थ इत्यन्ये । "ज्ञापकत्वमात्रेण"– संसर्गज्ञापकत्वमात्रसाधनेन । " अर्थासिद्धेः "– उद्देश्यासिद्धेः, उद्देश्यस्य स्वसंसर्गद्वयोपरक्तसंसर्गसिद्धे रनिर्वाहादिति यावत् । उद्देश्यस्य वाक्याधीनबोधविषयतयाभिमतस्य तादृशसंसर्गरूपवाक्यार्थस्य, असिद्धेः सिद्ध्यनिर्वाहादिति वार्थः । "प्रमापकत्वे" - वास्तवैकपदार्थप्रतियोगिकापरपदार्थानुयोगिक संसर्गज्ञापकत्वे वा, साध्य इति शेषः, " तेनैव"– स्थिरजलाभिमापकपयसा सिञ्चतीति वाक्येनैव ( व्यभिचारादिति ) तत्रापि तन्मतसिद्धात्पत्तिप्रयोजकरूपवत्त्वात्मक योग्यताघटितहेतुसत्त्वादिति भावः ।

केचित्तु " अनुमानविधयैवार्थसाधकत्वरूपस्य मानान्तरत्वाभाव साधकहेतो रसिद्धे र्धारणायाकांक्षादिमत्पदत्वरूपहेतुना यं तादृश हेतु मुपन्यस्यति ( वक्ष्यति ) साध्य मित्यस्य वक्तृस्वार्थानुमान हेतुनेत्यादिः । लिंगतया ज्ञापकत्वं-अनुमानविधयैवार्थसाधकत्वं । तच्चानुमितिकरणतावच्छिन्नस्वस्मृतिस्मारितार्थ संसर्गज्ञानकरणतासामान्यकत्वं । स्ववृत्तिपदार्थोपस्थितिकरणताया अनुमितिकरणतावच्छेदकानवच्छिन्नत्वात् बाधस्य साध्याप्रसिद्धेर्वावारणाय संसर्गनिवेशनम् । तथाच तादृश स्वमूलकानुभवकरणतासामान्यकत्वं पर्यवसितार्थः ( ज्ञापकत्व मात्रेणार्थासिद्धेरिति ) अनुमानविधया भ्रमजनकतयापि ज्ञापकत्व पर्यवसानसम्भवात् , अनुमितित्वव्याप्य स्वकरणकप्रमितिसाधकत्वरूप प्रमाणान्तरत्वाभाव साधकस्यानुमानविधयैव प्रमापकत्वस्यासिद्धयो-

## ज्ञानावच्छेदकतयाच संसर्गसिद्धिः,

---

देशासिद्धेरित्यर्थः । अनुमानविषयाज्ञापकत्वस्य अनुमानाभावे स्वकर-णकप्रमाघटितसाध्य व्यभिचारितया तसिद्धेरनुद्देश्यत्वादिति भावः ” इति व्याचकुः ।। तदसत्, अनुमितिश्च व्याप्यस्वकरणकानुभवाव करवरूप प्रमाणान्तरत्वाभावस्य साध्यतयैवोपपत्तौ साध्ये प्रमापर्यन्त निवेशनवैयर्थ्येन लिंगतया ज्ञापकत्वस्यापि तत्र हेतुतासम्भवेनार्थासिद्धय-संगतेः । ननु- संसर्गज्ञानपूर्वकत्व सिद्धावपिनोक्तानुमाना त्संसर्ग सिद्धिः, तस्यासाध्याघादित्याशंकां निराकरोति ( ज्ञानावच्छेदकतयेति ) ज्ञानावच्छेदकत्वं ज्ञानविशेषणतया साध्यघटकत्वं । संसर्गसिद्धिः -उक्त साध्यकानुमितौ संसर्गस्यभान । तावतापि समीहितसिद्धिः, विधेयतया संसर्गभानपर्यन्तस्य प्रवृत्तावनपेक्षितत्वात् । विधेयतावच्छेदकतया तज्ज्ञानेनापि प्रवृत्तिनिर्वाहादितिभावः ।

ननु विषयविशिष्टज्ञानस्य साध्यघटकत्वेऽपि विषयरूपविशेषस्यानुमितिविषयत्वं निर्युक्तिकं, साध्यविशेषणस्यानुमित्यविषयत्वेऽपि साध्य विषयताया अवच्छेदकतासम्भवात्, अवच्छेदकताया विषयतारूपत्वानुपगमात्तायत्वापि साध्यविषयता वैलक्षण्यसम्भवेन तद्घटितसाध्यकानुमितेः स्वघटितसाध्यकानुमिति वैलक्षण्यसम्भवात्; अत एव सम्बन्धतावच्छेदक संयोगसमवायत्वादे र्नविशिष्टधीविषयत्वमिति सिद्धांतोऽपि संगच्छते, अविषयस्यापि तस्य विषयतावच्छेदकतयासंसर्गविषयता वैलक्षण्यसंभवात् ; अन्यथा संयोगसमवायत्वादि सम्बन्धतावच्छेदकानां संयोगसामान्यसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकतायामनवच्छेदकत्वेऽवच्छेदकसंबन्धाननुगमेन संयोगसमवायादि सम्बन्धावच्छिन्नाभावानामिव संयोगसामान्य सम्बन्धावच्छिन्नाभावस्यापि भेदप्रसंगइति संयोगत्वादे स्तादृशाभाव प्रतियोगितावच्छेदकता वच्छेदकत्वावश्यकत्वे एत दनवच्छिन्न संसर्ग

ज्ञानज्ञानस्य तद्विषय विषयकत्व नियमात्।

---

विषयताशालि ज्ञानस्य तादृशाभावज्ञान प्रतिबध्यतानुपपत्त्या तस्य संसर्ग विषयतावच्छेदकताधौव्या द्विषयतावच्छेदकतायाविषयताप्रसंगात्। अत एव कार्यज्ञानज्ञानस्य तद्विषयकत्वात् कारणानुमाने अकारणस्यसाध्यतावच्छेदकप्रविष्टस्याविभानमिति मीमांसक सिद्धान्तो(निर्वाहो)पिसंगच्छत इत्याशंस्य,- साध्यतावच्छेदक प्रतीति विषयत्वे युक्तिमाह ( ज्ञानज्ञानस्येति)विषयोपरक्त ज्ञानज्ञानस्येत्यर्थः। "तद्विषयविषयकत्वनियमात "- तज्ज्ञानविषय विषयकत्वनियमात्। ज्ञानवा नित्यनुमित्यादौ व्यभिचार वारणाय विषयोपरागनिवेशः। तद्विशिष्टविषयक ज्ञानं तद्विषयकमिति सामान्य नियम एवाभिमतः, विशिष्टज्ञानस्य निवेशवैफल्यात्। संसर्गतया संयोगत्वादि विशिष्टविषयक ज्ञानस्य संयोगत्वाद्य विषयकत्वे संसर्गताभेदो विशिष्टविषयतायां निवेश्यः। घटइत्याकारक घटत्वादि विशिष्टबुद्धिरेव दृष्टान्तः। तादृश ज्ञानस्य घटत्वाद्य विषयकत्वे तस्य विशेषण ज्ञानविधया तथाविध विशिष्ट बुद्ध्यादि जनकत्वानुपपत्त्या तत्र तात्सिद्धिरिति बोध्यम्।

केचित्तु तद्विषयक ज्ञानं तद्विषयकमित्येवनियमः, ज्ञानवानित्याद्यनुमित्यादौ व्यभिचारवारणाय सति बाधके इतिहेतौ निवेशनीयम्, उक्तानुमित्यादौ विषयभासक सामग्र्य समवधान कालीनत्व रूपविषय भानबाधक सत्त्वा द्धेतुसत्त्वेन न व्यभिचार इत्याहुः। तन्न, बाधकाभावस्यहेतौ निवेशे इतर विशेषणवैयर्थ्यात्; तद्विषयक ज्ञानादौ नियमेन तद्विषता प्रयोजक विषय जन्यसामग्र्य जन्यत्वरूप तद्विषयकत्व बाधक सत्त्वेन व्यभिचारा नवकाशात्; प्रकृतानुमिति सामग्र्या स्वसंसर्ग भासकताया अपि तत्र संसर्गभाने विद्यमाने त्वनभ्युपगमात् संसर्गांशग्राहिता प्रयोजक विरहरूप बाधकस्य तत्र सन्दिग्धतया बाधकाभाव घटितहेतोः सन्दिग्धासिद्धेश्च।

संसर्गेच संम्बंधिन एव विशेषकत्वात् । पक्षधर्मतावला द्व्यापकत्वेना गृहीतस्यापि संसर्ग विशेषस्य सिद्धिः । अथैवं भ्रांति ज्ञानमपि भ्रमस्स्यात्; नचेष्टापत्तिः,

---

नन्वस्तु ज्ञानविशेषणतया संसर्गभानं, परन्तु तत्र कुतस्तत्तत्पदार्थपरत्वभानं तदभावेच प्रवर्तकज्ञाना निर्वाह इत्याशंक्याह (संसर्गेचेति) (सम्बन्धिन एवविशेषकत्वादिति) सम्बन्धिन स्तत्तत्पदार्थस्य सम्बन्धांशे विशेषणतया व्यापकतावच्छेदक घटकत्वेन तद्विषयतावच्छेदकत्वादित्यर्थः । सम्बन्धांशे तत्तत्पदार्थीयत्व भानमिति शेषः । ननु दृष्टान्ते घटमानयेत्यादौ पदार्थान्तर घटादि संसर्ग ज्ञानपूर्वकत्वस्यैव प्रसिद्धतया अप्रसिद्ध गोकर्मत्वादि पदार्थ संसर्ग ज्ञानपूर्वकत्वस्य कथ गामभ्याजेत्यादिनासिद्धिः, जनकीभूत व्यापकता ज्ञानविषयस्यैव व्याप्यस्यानुमितौ भानादित्य तआह (पक्षधर्मताबलादिति) गवादि पदघटितहेतौ पक्षधर्मताबलात् व्यापकता ज्ञानाविषयस्यापि गवादि पदार्थसंसर्गस्य दर्शितसामान्यव्याप्तिबलप्रवृत्तानुमाना त्सिद्धिरित्यर्थः । सामान्यव्याप्तिस्थाने यत्तत्पदार्थवत्त्वान्तरघटितसाध्यसाधनयो र्व्याप्ति ग्रहा दपि तादृशवत्त्वान्तरघटितहेतौ पक्षधर्मताज्ञाना त्तादृशवत्त्वान्तर घटितसा ध्यसिद्धि र्भवतीत्यन्यत्र दृष्टत्वादिति भावः । (अथैवमिति) "एवं"-विषयता वच्छेदकस्य विषयत्वनियमे (भ्रान्तिज्ञानमपीति) इदं रजतमिति भ्रमविषय कानुव्यवसायेऽपि नियमतो भ्रमस्य रजतत्वादि विशिष्टपुरोवर्तिविषय कत्वे तदनुव्यवसायस्य भ्रमांशे विशिष्टविषयत्वावगाहितायाअवश्याभ्युपेय त्वेन रजतत्वादिविशिष्ट पुरोवर्तिन स्तद्विषयतावच्छेदकत्वेन तद्विषयतया विशिष्टघटका सद्वैशिष्टयस्यापि विषयत्वादितिभावः । (इष्टापत्तिरिति)

ईश्वरस्यापि भ्रांतत्वापत्तेः ; इदं रजतमिति भ्रमादिव शुक्तौ रजत ज्ञानवा नयमिति भ्रमस्य ज्ञानात् भ्रांतिज्ञ प्रवृत्त्यापत्तेश्च ।

यत्तु भ्रमविषय विषयकत्वेन नभ्रमत्वम् , भ्रमविषयाणां सिद्ध्य सिद्धिपराहतत्वात्, इति ।

---

रजतत्वादिविशिष्टपुरोवर्तिनो भ्रमज्ञानविषयतावच्छेदकत्वे ज्ञानस्य भ्रमत्व मिष्टमेवेत्यर्थः । (ईश्वरस्यापि भ्रान्तत्वापत्तेरिति)ईश्वरज्ञानस्य सर्वविषयक स्य यो धर्मो यत्र वर्तते तद्धर्मविशिष्ट तद्धर्मविषयकत्वनियमात् , विशिष्ट विषयकत्वेन भ्रमविषयकत्वा द्विषयतावच्छेदकस्य विषयत्वनियमे तस्य भ्रान्तत्वापत्ते दुर्वारत्वा दित्यर्थः । भ्रमज्ञानस्य विशिष्ट विषयकत्वे न तत शुक्तौ रजतार्थिप्रवृत्ति नियमेन स्यादित्याह(इदमिति) ( प्रवृत्त्यापत्तेरिति) भवन्मते इष्टतावच्छेदकविशिष्टपुरोवर्तिविषयकत्वरूप प्रवर्तकतावच्छे दकरूपसत्वादिति भावः । नच-भ्रमत्वस्यासद्वैशिष्ट्यावगाहित्वात्मकस्य ज्ञाने अवगाहित्वविशेषणतयेव भाना त्पुरोवर्तिनि तद्भानात् न ततः प्रवृ त्त्यापत्तिरिति वाच्यम् ; टीकाकृतासंसर्गतयैवा सद्वैशिष्ट्यभानोप गमा त्तन्मते असत्सम्बन्धेन रजतत्वादिविशिष्टपुरोवर्तिविषयक ज्ञानत्वस्य भ्रमत्वरूपतया तद्भाने पुरोवर्तिनि रजतत्वादिवैशिष्ट्याव गाहितायां दुर्वारत्वात् । ननु भ्रमविषयविषयकत्वं न भ्रमत्वापा द्कं, अपित्वसद्विषयकत्वमेव, तच्चासद्घटिततया असदित्यापादका प्रसिद्ध्यानापत्तिसम्भव इति अन्येषां मसद्विषयकत्वस्य भ्रमत्वपदार्थत्व मभ्युपगच्छतां भ्रमत्वापादनसमाधान मुपन्यस्यति ( यत्त्विति ) ( भ्रम विषयेति ) आपादकमविष्टेत्यादिः । सिद्ध्यसिद्धिभ्यां । सत्वासत्वाभ्यां- "ज्ञानज्ञानस्यं" त्यादिग्रन्थस्य विषयभानविरोध्यसमवधानघटिततया यथा श्रुतनियमपरत्वापादिनस्तु भ्रमव्यवसायादौ प्रागुपस्थितस्यासद्वैशिष्ट्य।

तत्र [ समाधानं ] वक्ष्यामः । नैवम् , असद्विषयकत्वेन नभ्रमत्वं, भ्रमाविषयाणां सत्त्वात् । किन्तु व्यधिकरणप्रकारकत्वेन ।

---

द्विषयकत्व मपारमार्थिकवैशिष्ट्यविषयकत्वरूपं यदि न भ्रमत्वस्य रूपं अपितु विशेष्यविषयकत्वे सति विशेष्याविद्यमानविषयकत्वमेव, तदा ईश्वरज्ञाने शुक्त्यादीनां तदवृत्तिरजतत्वादिवैशिष्ट्यस्य च विषयतया तत्र तादृशासद्विषयकत्व मिष्टमेव ; तदंशे तदवृत्तिवैशिष्ट्य विषयकत्वस्य चापादकाभावः, उक्तनियमस्य तदापत्त्यनुपयोगित्वात्, नियमान्तरस्यचा नभ्युपगमा दित्याशयेन भ्रान्तिज्ञप्रवृत्त्यापत्ति मवतार्य पुरोवर्तिविषयकत्वे सतीष्टतावच्छेदकवैशिष्ट्यावगाहित्व मेव प्रवर्तकतावच्छेदक मित्यभिमानमूलकतया तदापत्तिं संगमयन्ति । विशेष्यांशे तत्तादवैशिष्ट्यावगाहित्वरूपव्यधिकरणप्रकारकत्वं यथाभ्रमत्वं तथा प्रवृत्तिविशेष्यांशे इष्टतावच्छेदकवैशिष्ट्यावगाहित्वरूपं तदंशे तत्प्रकारकत्वमेव प्रवर्तकतावच्छेदकं, अतो न दर्शितप्रवृत्त्यापत्तिरिति च सिद्धान्ताभिप्रायं वर्णयन्ति । ( तत्र [ समाधानं ] वक्ष्याम इति ) असद्विषयकत्वस्य भ्रमत्वरूपताखण्डनेना प्रवृत्त्यापादकत्वस्या सद्घटिततया आपादकत्वव्याघातानुधावनानौचित्यं सूचयिष्यत इत्यर्थः । अथैवमिति पूर्वपक्षे स्वयं समाधत्ते ( नैवमिति ) ( असद्विषयकत्वेन न भ्रमत्वमिति ) भ्रमत्वं नासद्विषयकत्वाभिन्न मित्यर्थः । भ्रमविषयाणां सर्वेषामेव च, " सत्त्वात् "-पारमार्थिकत्वात् । संसर्गस्या प्यन्यत्र प्रसिद्धस्यैव भ्रमेभानं, असतो भाने माना भावादिति भावः । ( व्यधिकरण प्रकारकत्वेनेति ) भ्रमत्व मित्य नुषंगेणान्वयः । ननु - भवतु व्यधिकरण प्रकारकत्वं भ्रम व्यवहारविषयता वच्छेदकं, तत्तप्र-

नच भ्रमस्यज्ञाने व्यधिकरणप्रकारः, रजतत्व प्रकारकत्वस्य भ्रमेसत्त्वात् । अन्यथा भ्रान्त्यु च्छेदः, प्रमाणाभावात्।

---

भ्रमातु व्यवसायादौ भ्रमत्वापत्ति भेवेदित्याशंकां निरस्यति (नचेति) मद्गोत्यर्थः । व्यधिकरणमिति विशेष्यपदं, विशेषणपद स मानलिंगत्वानियमात्, अनियतलिंगत्वे नपुंसकत्व मौत्सर्गिकमिति नतस्य विशेषण वाचकपदेन समानलिंगता, प्रकारपदस्य चा जह-ल्लिंगतया न नपुंसकत्वं । भ्रमानुव्यवसाये शुक्त्यादौ रजतत्वादि प्रकारकत्व स्मारकेपि प्रकारिता विशेषणतयैव रजतत्वा वगाहित्ता, नतुशुक्त्यादि विशेषणतयेति तदवृत्ति धर्मो नतदंशेप्रकार इत्यर्थः । भ्रम ज्ञानस्य शुक्त्यादौ रजतत्वाद्य प्रकारत्वेपि तद्विषय भ्रमनिष्ठ प्रकारितायां रजतत्वीयत्वाविरहे तादृश प्रकारितायां रजतत्व प्रकार-कत्वतस्य व्यधिकरण प्रकारकत्वं दुर्वारमेवेत्याशंकां निराकर्तु भ्रम निष्ठ प्रकारितायां रजतत्वीयत्व मस्त्येवेति न रजतत्वस्य विशेष्या सम्बद्धत्वरूप वैयधिकरण्यमिति दर्शयति ( रजतत्वेति ) "अन्यथा"- रजतत्वीय प्रकारिताया भ्रमेसत्त्वे । "भ्रान्त्युच्छेदः"- भ्रमत्वस्य धर्म-स्वोच्छेद प्रसंगः । "प्रमाणाभावात्"- प्रमाणे भ्रमभिन्नस्या सत्वादिति केचित् ।

परंतु असद्वैशिष्ट्यस्य भ्रमविषयत्वेबाधकं पूर्वमनुक्त मतस्तद्बाधकमाह ( अन्यथेति ) असद्वैशिष्ट्याव गाहित्वस्य भ्रमत्वरूपत्व इत्यर्थः । "भ्रान्त्युच्छेदः"-भ्रमत्वासिद्धिप्रसंगः । "प्रमाणाभावात्"-तद्भा वकस्य तद्घटका सद्विषयकत्वेन प्रमाणत्वाभावात् । भ्रमत्व शरीरेसतो विशेषणतया प्रवेशात संसर्गविधयैवासतो ज्ञानमभ्युपगच्छतां टीकाकृता मुक्तभ्रमत्वस्य प्रदाहरूभयासेति व्याचक्रुः ।

ननु प्रतारकवाक्ये व्यभिचारः, विशेषदर्शनेन तत्र संसर्गज्ञानाभावात् ; नच संसर्गमप्रतीत्य वाक्यरचना नसम्भवतीत्याहार्यं तस्य संसर्गज्ञानं संभवतीतिवाच्यं, तावत्पदज्ञानादेव शुकस्येववाक्यरचनोपपत्तेः; अन्यत्रापि तस्यैवतन्त्रत्वादिति चेन्न;- एत द्वाक्यमेतस्य[पदार्थ]संसर्गं बोधयिष्यतीत्याश-

---

( प्रतारकवाक्यइति ) भूतलादौ घटाभावादिसत्त्वे ज्ञात्वाप्रयुक्ते भूतलं घटवदित्यादि वाक्यइत्यर्थः (व्यभिचारइति) तत्रवक्तुः प्रकृत संसर्गज्ञानविरहेण तद्घटित साध्याभावादित्यर्थः । तत्र वक्तुस्संसर्गं ज्ञानमेव नकुत इत्यतआह ( विशेषेति ) विशेष दर्शनं प्रकृतवाक्यार्थ ज्ञानविरोधिनिश्चयः, तत्सत्त्वेन, तत्र भूतलादौ घटादिसंसर्गज्ञानस्य वक्तु रनुदयादित्यर्थः । ( वाक्यरचनानसम्भवतीति ) वाक्यार्थज्ञानस्य वाक्यहेतुत्वादितिभावः । व्यभिचारादिना वाक्यार्थज्ञानस्य हेतुतैवनास्तीत्याह( तावदिति )तावत्पदरूपवाक्यज्ञानादितइत्यर्थः। "अन्यत्रापि"-सुबोधयिषुवाक्येपि। "तस्यैव"-पदज्ञानादेरेव। एवकारेण वाक्यार्थज्ञानस्यव्यवच्छेदः । कार्यतावच्छेदककोटौ व्यभिचारवारणे त्वन्यथासिद्धया वाक्यार्थज्ञानस्या हेतुत्वादिति भावः। वक्तृवाक्यार्थज्ञानस्यान्यथासिद्धत्वेपि तस्यवाक्यार्थबुबोधयिषापूर्वकवाक्ये नियमतोऽपेक्षाऽस्त्येव, वाक्यार्थबुबोधयिषाहेतुभूतवाक्यार्थं ज्ञानज्ञानस्य वाक्यार्थं ज्ञानत्वा दित्याहार्यं वाक्यार्थज्ञानं प्रतारकस्याप्यस्त्येवेति तद्वाक्ये तत्पूर्वकत्वरूपं साध्य मस्तीति न व्यभिचार इति समाधत्ते ( एतद्वाक्यमिति ) ( एतस्य [ पदार्थ ] संसर्गं बोधयिष्यतीति ) एतत्पदार्थ

येन वाक्यप्रयोगात्, तस्यापि संसर्गज्ञानात्, योग्यताविरहाच्च ।

अत एव विसंवादिवाक्ये शुकवदुच्चरिते न व्यभिचारः। शब्दात्संसर्गप्रत्ययस्तु योग्यताभ्रमात्।

---

संसृष्टैतपदार्थज्ञानं जनयिष्यतीत्यर्थः। "तस्यापि" – तादृशाशयवतः प्रतारकस्यापि । ननु – विशिष्टवाक्यार्थज्ञानं विनापि एतस्मिन्नर्थे एतदर्थसंसर्गज्ञानं भवत्वितीच्छया प्रतारकस्य प्रयोग स्सम्भवतीति तत्र व्यभिचारो दुर्वार इत्यत आह (योग्यतेति) तथा च तत्र हेतुरेव नास्ति, हेतुस्थादिशब्देन योग्यतापरिग्रहादिति कुतो व्यभिचार इतिभावः। "अतएव"–योग्यताविरहादेव। "विसंवादिवाक्ये"– बाधितार्थवाक्ये । "शुकवदुच्चरिते "– वाक्यार्थबोधविषयं विनैव तावत्पदमात्रज्ञानात् प्रयुक्ते। एतेन तत्र वक्तु स्संसर्गज्ञानाभावेन साध्यं नास्तीति सूचितम् । नच तत्र तात्पर्यविरहेणापि हेत्वभावात् योग्यताविरहादेवेत्युपष्टम्भासंगतिरिति वाच्यम्, तत्र भ्रमात्मक संसर्गप्रमातरत्वा तद्विषयक भगवत्तात्पर्यसम्भवात्। नचैवं भगवत्संसर्ग ज्ञानमादायैव साध्यमविकलमितिवाच्यम्, एकपदार्थप्रतियोगिकापरानु योगिकसंसर्गस्य वास्तवस्यसाध्यघटकत्वेनायोग्यस्थले तदप्रसिद्धयाभगव तोऽपि तादृशसंसर्गज्ञानासत्वेन तज्ज्ञानपूर्वकत्वरूपसाध्यसत्वस्यचानिर्वा हात्। अतएवविसंवादिपर्यन्तानुसरणम् । ननुयोग्यताया हेतौ निवेशेऽपि विसंवादि वाक्ये हेत्वभावेन संसर्गज्ञानपूर्वकत्वानुमानासम्भवा तत्र भ्रमात्मकोऽपि संसर्गप्रत्यय कदापि नस्यादित्यत आह(शब्दादिति)तादृशादि त्यादिः(योग्यताभ्रमादिति)योग्यताघटितहेतो स्तत्रा भावेऽपि तादृशहेतुभ्रमा

## अथ संसर्गज्ञानं विना शुकस्यान्यस्य वा संवादिवाक्ये भ्रांतप्रतारकवाक्येच व्यभिचारः, कथं वा तत्र संसर्गप्रमा, वक्तृज्ञानानुमानासम्भवा

---

दित्यर्थः । वक्तृज्ञानमेव साध्यघटक मित्यभिमानेन योग्यतान्येव वाक्ये व्यभिचार माशङ्कते (अथेति) (शुकस्येति) संसर्गज्ञानाभाववत इत्यर्थः । (अन्यस्येति) तावत्पदज्ञानादेव वाक्यप्रयोक्तुरिति शेषः । वक्तृतात्पर्यस्य हेतुघटकत्वे व्यभिचारो न सम्भवतीति स्थलान्तर माह (भ्रान्तप्रतारकवाक्य इति) विशिष्टवाक्यार्थं प्रतारकैव अस्मिन्नर्थे एतदर्थसंसर्गप्रतीति र्भवत्विति प्रतिसन्धाय प्रयुक्ते वाक्य इत्यर्थः । (व्यभिचार इति) एकपदार्थे अन्यपदार्थसंसर्गादि वक्तृज्ञानघटितसाध्याभावादिति भावः । वक्तृज्ञातवाक्यार्थबोधरूप योग्यताया हेतुप्रवेशे वाक्यार्थानभिज्ञवाक्ये तादृशयोग्यताविरहेण व्यभिचारासम्भवात् दोषान्तर माह (कथं वेति) "तत्र"-वाक्यार्थानभिज्ञप्रयुक्तवाक्यश्रवणस्थले । "संसर्गप्रमा" - एकपदार्थे परपदार्थसंसर्गज्ञानं (वक्तृज्ञानानुमानासम्भवादिति) वक्तृज्ञातवाक्यार्थबोधघटितहेतो रसत्त्वात् साध्यस्य च बाधादिति भावः ।

यद्यपि स्वरूपसल्लिंगं नानुमिति हेतुः, तथा स्वरूपसद्बाधोऽनुमिति विरोध्यपि बाधाज्ञानदशायां योग्यताघटितहेतुभ्रमा त्संसर्गप्रमाप्य सम्भवति, तथापि फलीभूतज्ञानाभावनिश्चयस्थले बाधनिश्चयसत्त्वेन हेतुभ्रमस्यचासम्भवेन वक्तृज्ञानानुमानासम्भवात् संसर्गज्ञानानुपपत्ति रेतन्मत इत्येतत्पद्यत्वेनैव तद्ग्रन्थसङ्गतिः । आप्तोक्तत्वस्य यथार्थवाक्यार्थज्ञानवदुक्तत्वरूपस्य शब्दप्रामाण्यप्रयोजकत्वे न्यायमतेऽप्युक्तस्थले संसर्गप्रमानसम्भवति, तादृश प्रामाण्य प्रयोजकरूपाज्ञानात्, तथा सत्येतन्मतेऽपि संसर्गप्रमानुपपत्ति र्नदोषाय, नवा तत्र व्यभिचारः ; योग्यताशरीरे वक्तृज्ञातत्वविशेषणस्य प्रवेश्यत्वात् । यद्यपि

दिति चेन्नः– यदि तत्र संसर्गप्रमा तदा वेदतुल्यते
त्युक्तम् । आकांक्षा योग्यतासत्तिश्च ज्ञातोपयु
ज्यते । अन्यथा शाब्दभ्रमानुपपत्तिरिति ॥ उच्यते,

---

यतस्तज्ज्ञानं न्यायनये शाब्दज्ञाने नापेक्ष्यते तदा परमेश्वरीयज्ञानमादाय साध्यसत्त्वाद्धेतुश्च भ्रान्तप्रतारकवाक्येऽपि न व्यभिचारः, संसर्गज्ञानवद्वुक्तत्वपर्यन्तस्य साध्यतानुपगमात् । न वा वक्तृसंसर्गज्ञानानुमानासम्भवः हेतुघटकयोग्यताया मुक्तविशेषणस्य प्रवेशापत्त्यादिति 'ज्ञानाघच्छब्दकत्व" इति प्रकृतानुमानात्संसर्गसिद्धेरप्युपपत्तेरिति समाधत्ते ( यदीति ) ( उक्तमिति ) उपपत्तिवाद इत्यर्थः । आकांक्षायोग्यतासत्तीनां न्यायमते स्वरूपसतीनां शाब्दधीहेतुत्वे तदज्ञानदशायामपि तत्स्थले संसर्गप्रत्यया स्यात् तदा च वैशेषिकमते उक्तहेतुज्ञानासम्भवेन तदनिर्वाहात् शब्दप्रामाण्यं खण्डयितुं न शक्यमित्यतो न्यायमतेऽप्याकांक्षादीनां ज्ञानं शाब्दधीहेतुरिति व्यवस्थापयति ( आकांक्षेति ) 'ज्ञातोपयुज्यते"इत्यस्य न्यायमतेऽपीत्यादिः । 'अन्यथा" स्वरूपसतीनां तासां शाब्दबोधकारणत्वे । ( शाब्दभ्रमानुपपत्तिरिति ) आकांक्षादिभ्रमजन्यशाब्दबोधानुपपत्तिरित्यर्थः । वह्निना सिञ्चतीत्ययोग्यस्थले स्वरूपसदाकांक्षासत्त्वासत्त्वेन योग्यताया ज्ञातोपयोगितामात्रेणैव शाब्दभ्रमोपपत्तेराकांक्षासत्त्योस्स्वरूपसतोर्हेतुताया शाब्दभ्रमानुपपत्त्या प्रयोजकतया यथाश्रुतासङ्गतेः । न च आकांक्षादिरहितायोग्यस्थले स्वरूपसदाकांक्षादिहेतुताया अप्याकांक्षादिभ्रमाधीन शाब्दभ्रमानुपपत्तिप्रयोजकतया यथाश्रुत सङ्गच्छतइति वाच्यम् , तथासत्यपि स्वरूपसदाकांक्षासत्तिहेतुत्वे योग्यनिराकांक्षादिस्थले आकांक्षादिभ्रमाधीनशाब्दप्रमाया अप्यनुपपत्त्या तदप्रदर्शनेन न्यूनताया यथाश्रुतेदुरुद्धर-

अर्थज्ञानं प्रवर्तकं, नतु तज्ज्ञानज्ञानं; गौरवात्, व्यभिचाराच्च । अतो रजतज्ञानवा नय मिति ज्ञानं नप्रवर्तकं, किंत्विदं रजतमितिज्ञानं।इदमपि ज्ञानं रजतविषयकमितिचेत् ? सत्यं, नतु रजतत्वप्रकारकं ।

---

त्वात् । संसर्गसाध्यकादनुमानमुपेक्ष्य संसर्गज्ञानपूर्वकत्वपर्यन्त साध्यकानुमानेन श्रोतुः प्रवृत्त्यादिक मुपपादयतो वैशेषिकस्याभेदादिसंबन्धेन रजतादिप्रकारकेदमादिविषयकप्रवृत्ताविदमाद्यंशे रजतादे रभेदादि संबन्धज्ञानत्वेन हेतुतेत्याशयं मन्यमानस्सिद्धान्ती प्रथमत स्तेनरूपेण प्रवर्तकता मेव खण्डयति ( अर्थेति) "तज्ज्ञानज्ञानं" प्रवृत्ति विषयीभूतो योर्थस्तज्ज्ञानविषयकज्ञानत्वावच्छिन्नं । " गौरवात "- अर्थज्ञानत्वापेक्षया ज्ञानज्ञानत्वस्यावच्छेदकस्य गुरुशरीरत्वात् । ( व्यभिचाराच्चेति ) ज्ञानाविषयकेदं रजतमित्यादि ज्ञानजन्यप्रवृत्तावित्यादिः । ( रजतज्ञानवानयमितीति ) पुरोवर्तिनि रजतसंसर्गज्ञानवा नयमितीत्यर्थः । अर्थज्ञानत्वेनैव प्रवर्तकता, आकांक्षादि मद्वाक्यत्वेन पदधर्मेणार्थधर्मसंसर्गानुमान न सम्भवति, वैयधिकरण्यादित्यतोज्ञानपूर्वकत्वपर्यंतं साध्यम् । अनुमानादपि प्रवृत्त्यादिकार्यंनिर्वहति, तत्रापि साध्यतावच्छेदकघटकतया प्रवृत्तिविषयीभूततत्पदार्थं तत्तत्संसर्गभानादित्याशयं प्रकाशयन्वैशेषिकश्शंकते ( इदमपीति ) "इदं"- प्रकृतानुमानाधीनं । "रजतविषयकं" - रजतादिविषयकं ( नतु रजतत्वादिप्रकारकमिति ) अभेदसम्बन्धे नेदमंशे रजतप्रकारकमित्यर्थः, भावार्थो विवक्षणात् । अन्यथा इदं रजतमिति शाब्दबोधस्यापीद मंशे पदार्थतावच्छेदक रजतत्वाद्यप्रकारकतया

प्रवर्तकञ्च तथा, अन्यथा भ्रांतस्येव भ्रांतिज्ञस्यापि प्रवृत्तिप्रसंगः; तदुभयसंकरापत्तिश्च। एतेन लक्षणाद्यनुरोधात्तात्पर्यग्रहो वाक्यार्थधीहेतुः, तात्पर्यंच पदार्थसंसर्गविशेषप्रतीत्युद्देश्यकत्वं, तथाच तद्ग्राहकानुमानादेव तात्पर्यज्ञानावच्छेदकतया संसर्गसिद्धिरित्यपास्तं.

---

प्रसंगतेः । ( प्रवर्तकञ्चेति ) अभेदसम्बन्धेन रजतादिविशेषितेदमादिविषयक प्रवृत्तिजनकज्ञानमपीत्यर्थः ।(तथेति)तादृशविशिष्टावगाहीत्यर्थः। ननु-विशिष्टं विशेषणसम्बन्धविशेष्येभ्यो नार्थान्तरमिति तावद्विषयकत्वमेव विशिष्टविषयकत्वम् , तथाचोक्तानुमानाधीनं तावद्विषयक ज्ञानंप्रवर्तकमित्यत आह ( अन्यथेति ) तावद्विषयकत्वस्यैव विशिष्टविषयकत्वेस्वेत्यर्थः । ( भ्रान्तिज्ञस्येति ) पुरोवर्तिनमभेदसम्बन्धेन रजतप्रकारेणज्ञानात्ययमिति ज्ञानवतइत्यर्थ ।( तदुभयेति ) भ्रमतद्विषयकज्ञानयोरविशेषापत्ति श्चेत्यर्थः । भ्रान्तिविशेषदर्शीयज्ञानस्यापि भ्रमत्वापत्तिरिति यावत । तथा च विशिष्टस्यानतिरेकेपि विश्रृङ्खलतया भासमान तत्तत्पदार्थविषयतातो विशिष्टनिरूपितविषयता विलक्षणैयागत्या स्वीकरणीया, सैवप्रवर्तकतावच्छेदिका भ्रमत्वप्रयोजिकाच, तादृशीचविषयता नोक्तानुमितावितिकथन्तस्याः प्रवर्तकतेतिभावः । "एतेन"- ज्ञानविशेषणतया संसर्गज्ञानस्या प्रवर्तकत्वेन । इत्यपास्तमित्यग्रिमेणान्वयः ( लक्षणाद्यनुरोधादिति ) यष्टीः प्रवेशयेत्यादौ लाक्षणिकपदघटितवाक्ये मुख्यामुख्यार्थ बोधस्य नानार्थस्थले तात्पर्यविषययोग्यार्थांतरविषयकबोधस्य संभवा तात्पर्यविषयसंसर्गान्तरबोधस्यच निर्वाहानुरोधादित्यर्थः ( पदार्थससर्गविशेषेति)रजतपुरोवर्त्यभेदादीत्यर्थः। "प्रतीत्युद्देश्यकत्वं-" प्रतीतीच्छयोच्चारितत्वम् । " तात्पर्य ज्ञानावच्छेदकतया "- तात्पर्यघटक प्रतीतिविशेषणतया ।( सिद्धिरिति ) शाब्दबोधात्पूर्वं न्यायमते व्यावश्यकीतिशेषः । तथाच ततएव प्रवृत्ति

किंच – व्यापकतावच्छेदक प्रकारिकानुमितिः । अतः स्मारितार्थे संसर्ग ज्ञानपूर्वकाणीत्यनुमितिरस्यात् , नतु रजतज्ञानपूर्वाकाणीति।

---

निर्वाहे किं शब्दस्य पृथक्प्रमाणत्वेनेतिभावः । ननु संसर्गविशेषेणैक पदार्थविशिष्टापरपदार्थज्ञानपूर्वकत्व मेवोक्तहेतुनानुमेयमित्याशंकातो र जतमिदमित्यादिशेषाक्या द्रजतत्वादि विशिष्टविषयक प्रवृत्त्यनिर्वाह माह ( किञ्चेति ) ( व्यापकतावच्छेदक प्रकारिकेति ) सामान्यव्या प्तिस्थले व्यापकताग्रहे यत्पदार्थातिरिक्तपदार्थानां येन प्रकारेणभान साध्यशरीरे तत्स्थले तदन्यप्रकारानवच्छिन्न विषयणीत्यर्थः । सामान्यव्या प्तिस्थले पक्षधर्मताबलेनाप्रसिद्ध विशेषभाना यथाश्रुतनियमासंभवात् । [ "ज्ञानपूर्वकाणी" "त्यनन्तर" रजतादिपदार्थ विशिष्टेदमादिपदार्थ ज्ञानपूर्वकाणीतिचे " तिपूरणीयं ] ( नतिवत्यादि ) नतुरजतत्वाद्यभिन्नेद मादिज्ञानेत्यर्थः । उक्तानुमानेपदार्थत्वेनैव तत्पदार्थानां व्यापकतावच्छे दक घटकता, नतु विशिष्येतिभावः ।

अथ पदार्थाअपिपदाभ्यां यदिपूर्वोक्तरीत्या सामान्यव्याप्तौ निवेश्य ते, तदा पक्षधर्मताबला द्रजतादि पदार्थत्वेनेव रजतत्वादिनापि रजतादि विषयकानुमितिरसम्भवतीतिचेत् ? यत्नद्वयां पदार्थनिवेशे पदार्थपक्षक संसर्गतानुमानस्यैव सम्भवेन ज्ञानानुमान प्रयासानौचित्यात् , पदार्थपक्षकानुमान वक्ष्यमाणस्य योग्यताघटकहेतु विशेषणाविश्वयासम्भवा दनुमानानिर्वाहरूपदूषणस्य ज्ञानानुमानपक्षेपि सम्भवात् ।

परंतूक्तनियमसत्वा त्सामान्यव्याप्तितः पक्षधर्मताबलादपि नाप्रसि द्धविशेषानुमितिस्सम्भवति । आद्ये व्युत्पत्तिस्थले गवानयनादाव व प्रवृत्तिविषयत्वेन लिङ्गेन प्रसिद्धज्ञानानुमित्यैव गवानयनादिविषय क ज्ञानसिद्धिरुपगन्तव्ये त्यभिप्रायकोयं ग्रन्थ । अग्रिमार्थं पक्षकानु

तस्मात्प्रवर्तकं ज्ञानं शब्दादेव । अतएवप्रवृत्त्यर्थं मनुवादकता शब्दस्येत्यपास्तं, शाब्दानुमित्यो र्भिन्नप्रकारकत्वादेकविषयकत्वाभावेना ननुवादकत्वात् , तस्यैवप्रमाणत्वात् ।

---

मानेपीदं मादिपक्षे रजतादिसंसर्गसाधने पक्षभिन्नस्यापि रजतादि संसर्गिणस्सत्वात दृष्टान्तसौलभ्येन विशिष्यैव व्याप्तिग्रहस्सम्भवतीति सामान्यव्याप्ते स्नादरणीयत्वादग्रे तादृशानुमाना शङ्कासङ्गतिः । येन पुंसा क्वचिदपि रजताभेदादि नावधारितस्तस्य विशेषव्याप्त्या पक्षरूपेदं मादिपदार्थे तदनुमाना सम्भवश्चाधिक दूषणं बोध्य । पद पक्षकानुमानेच एकपदार्थे संसृष्टापरपदार्थरूपा पूर्ववाक्यार्थस्य साध्य घटकतया विशिष्यव्याप्त्यनुधावन क्वापि नसम्भवतीति विशेषइत्याहु ।

( शब्दादिति ) तत्र प्रमाणतया स्वीकृतादिति शेषः । एव कारेणोक्तानुमानव्यवच्छेदः । " अतएव " - अनुमानवच्छाब्दबोधप्र काररजतादिविषयक तत्संसर्गकज्ञानासम्भवादेव । ' अपास्त ' मित्य नेनान्वयः ( अनुवादकतेति ) वक्तानुमानागृहीत पदार्थसंसर्गविष यके विशिष्यरजतत्वादि पदार्थतावच्छेदकप्रकारेण रजतादिगोचरानु भवान्तरं हेतुत्वमर्थः ( शब्दस्येति ) स्वीक्रियतइतिशेषः । तथाच नतस्य प्रमाणता, अगृहीतग्राहिणएवानुभवस्य प्रमात्वादितिभावः । अतएवोक्तपदार्थं स्वयमेव विवृणोति ( शाब्दानुमित्योरिति ) " भिन्न प्रकारकत्वात " - तत्तत्पदार्थस्य रजतत्वादिप्रकारकत्वात् । " एक विषयकत्वाभावेन "- एकविधविशिष्टार्थकत्वाभावेन । " अननुवादक त्वात " - रजतत्वाद्यवच्छिन्न रजतादिघटितविशिष्टार्थे नुवादकत्वा सम्भवात् । " तस्य " - शब्दस्य । " प्रमाणत्वात " - तादृश विशिष्टार्थंप्रति प्रमाणत्वात । यादृशविशिष्टार्थः पूर्वमगृहीतः तादृशवि

नन्वेते पदार्था स्तात्पर्यविषयमिथ स्संसर्गवन्तः,

---

शिष्टार्थविषयकानुभव स्तादृशार्थे प्रमेत्यस्यैवागृहीतग्राह्यनुभवः प्रमेये तदर्थत्वादितिभावः ( एतेपदार्थाइति ) इदं रजतमित्यादौ. येनरजतत्वेदंत्वादिनार्थानां पदादुपस्थितिः तत्तद्रूपावच्छिन्नपर एवैतच्छब्द इतिसूचयितुं ' पदार्था ' इत्युक्तं, नतु पदार्थत्वेनापि तेषां निवेशः, सामान्यरूपेण निवेशप्रयोजनाभावा च्छाब्दबुद्धौ नैयायिकानां तद्रूपाभानात् । तथाच रजतेदमादयइत्यर्थः ( तात्पर्यविषयेति )

अथ तात्पर्यविषयत्वं साध्यघटक संसर्गविशेषणं संसर्गत्वेन संसर्गनिवेशनएवसम्भवति, विशेषरूपेण संसर्गनिवेशे तात्पर्यविषयत्वस्याव्यावर्तकत्वात् ; तथाचोक्तानुमानेन विशिष्टपदार्थावगाहिन्या अनुमिते स्सम्भवेपि विशिष्टसंसर्गावगाहिन्या स्तस्या असम्भवेन प्रवर्तकज्ञानानिर्वाहः तात्पर्यविषयत्वं परित्यज्यविशेषरूपेण संसर्गप्रवेशे द्विमी यहेतौ संसर्गपरेति पदविशेषण वैयर्थ्यं, अग्रेच विमलजलमित्यादौ नदीकच्छयो स्संसर्गस्य तात्पर्याविषयतया व्यभिचारप्रदर्शनस्या संगतिरितिचेत् ? यथाश्रुते तदनुमाने विशिष्टसंसर्गबाधकतानुपपत्तिरूपदूषणमग्रिममूलाभिमतमेव । तात्पर्यमनन्तर्भाव्य विशिष्टसंसर्गानुमानमेव यदि निष्कर्षानुसारिणां परेषां मतं, तदा तत्रापि संसर्गज्ञानेच ' वर्यत्वि ' त्यादिना वक्ष्यमाणमेव दूषणं । अथवा नैयायिकानामिव परेषां मतेपि संसर्गज्ञाने तात्पर्यज्ञानापेक्षा निर्वाहाय तात्पर्यस्य हेतुप्रवेश आवश्यकः । एवञ्च तत्साध्यत्वायं विशेषरूपेण प्रवेशितेपि संसर्गे तात्पर्यविषयत्व निवेश्यते । एकपदार्थस्य परपदार्थोपरक्तसंसर्गसिद्धेरेवोद्देश्यतया तन्निर्वाहायमिपदइति । तेन परस्पर संसर्ग स्साध्यइति लभ्यते । एवंच साध्ये तात्पर्यस्य संसर्गांशे निवेशन एव हेतौ तदंशे तात्पर्यविषयत्व संसर्गांतरघटितहेतुमत स्तात्पर्यविषयतत्संसर्ग घटितसाध्यवत्त्वा निर्वाहेण प्रसक्तव्यभिचारवारकतया सार्थकमिति साध्येपि तात्पर्य

आकांक्षादिमत्पदस्मारितत्वात् ,

विषयत्वं संसर्गविशेषणमावश्यकं । एवमतात्पर्यविषयपदार्थप्रतियोगिक तात्पर्यविषयसंसर्गसिद्धिवारणाय संसर्गप्रतियोगिभूतहेतुघटकार्थे तात्पर्य विषयत्वस्यावश्यं निवेशनीयतया साध्यघटकसंसर्गप्रतियोगिन्यर्थे तद्विशे षण देयं, अन्यथा हेतौ तद्विशेषणस्य व्यभिचारावारकतया वैयर्थ्योपपत्तेः । वस्तुतस्तदर्थोपरागेण संसर्गविशेषप्रतीतिर्भवत्वित्याकारकेच्छा घटित संसर्गतात्पर्यस्य तदर्थघटितस्य निवेशेनैवोपपत्तेः तदर्थतात्पर्यविषयत्व रूपविशेषणान्तरं न प्रवेश्यं । हेतौ स्वतात्पर्यविषय संसर्गघटितत्वेच ' विमलजलं नद्याःकच्छेमहिषश्चरति ' इत्यत्राग्रे संसर्गतात्पर्यघटित साध्याभावेनव्यभिचारस्य प्रदर्शनं हेतौ तात्पर्यप्रवेशेनास्तीत्यभिमाने नैव । नच रजतादिपदार्थप्रतियोगिकाभेदसंसर्गस्य पक्षभिन्नार्थान्तरेपि सत्वेन दृष्टान्तसौलभ्या द्विशेषव्याप्तिरेव ग्राह्यत्रेति किं दर्शितसा मान्यव्याप्त्यादरेणेतिवाच्यम् , तादृशसंसर्गस्यार्थान्तरे सत्त्वेपि तादृशा र्थे तादृशसंसर्ग तद्घटितहेतूभयवत्त्वाग्रहदशायां तयो र्व्याप्तिग्रहास म्भवेन तादृशविशेषव्याप्तितः पक्षेसंसर्गसिद्ध्यनुपपत्तेः, तदानीमपिच न्यायमते तत्र तत्संसर्ग बोधात । नन्वेवमपि तत्संसर्गयो रेकस्यैव वस्तुतस्त्वेन निवेशोस्तु, किमर्थं उभयो स्तथानिवेशइति वाच्य, यदा हेतुमत्तया गृह्यमाणार्थान्तरस्यार्थस्यापि प्रकृतसंसर्गः प्रकृतार्थस्यान्योपि संसर्गो नगृहीतः तदा अन्यपदार्थप्रतियोगिक प्रकृतसंसर्गस्य प्रकृतपदा र्थप्रतियोगिकान्यसंसर्गस्य तद्घटितहेतौ तादृशव्याप्तिग्रहादेव सिद्ध्या पत्योमयोरेव वस्तुतस्त्वेनोपादानस्यावश्यकत्वात् ।

( आकांक्षादीति ) एतदर्थे तत्संसर्गतात्पर्य घटिते तात्पदाकांक्षा दिमत्पदस्मारितत्वादित्यर्थः । उक्तसामान्यव्याप्तौ घटादिरूपार्थो धेय त्वादिरूपसंसर्गतात्पर्यघटित घटादिपदाकांक्षादिमादिदमादिपदस्मारितो घटादिप्रतियोगिकाधेयत्वादि संसर्गककर्मत्वादिरेव सुलभोदृष्टान्तः ।

एतदर्थे तात्संसर्गतात्पर्यघटितोक्ताकांक्षा च एतदर्थ प्रतियोगिकाघ स्वानुयोगिक [ स्वैतदर्थ ] स्वाभ्यां वक्त्रा एतत्पदेन प्रतिपिपादयिषितोय एतत्संसर्गः स्वत्पदेन प्रतिपिपादयिषितोय एतत्संसर्गस्तत्प्रतिपिपादयिषयोच्चरितत्वेसति स्वैतत्पदोभय व्यतिरेकप्रयुक्त स्वानुयोगिकत्वे तदर्थप्रतियोगिकत्वोपरक्ते तात्संसर्गानुभवाभावकत्वम् । सत्यंतद्दलप्रवेशात्पुत्रोराज्ञः पुरुषोपसार्यतामित्यादौ पुरुषादौ तात्पर्यविषय राजसंसर्गाभावेन व्यभिचारप्रसंगस्य नावकाशः । तत्र स्वपदं हेतुमात्रं यत्र सम्पाद्यं तादृशार्थपरम् । यद्यपि घटः कर्मत्वमानयनं कृतिरित्यादावाकांक्षाप्रसंगवारक विशेष्यदलस्य हेतावप्रवेशेपि न तत्र व्यभिचारप्रसक्तिः, घटकर्मत्वादिसंसर्गे तात्पर्यासत्वे सत्यंतदलस्यैवाभावात् तत्त्वाबे साध्यस्यापि सत्वात्; तथापि तदप्रवेशेघटः कर्मत्वमित्यादौ घटकर्मत्वादिपद तदर्थघटित हेतुमत्त्वात्तत्ता तत्तत्पदार्थसंसर्गसिद्धि दुर्वारैवेति तद्वारणाय हेतौ तद्दलप्रवेश आवश्यकः । नच व्यभिचारावारकतया तद्दलवैयर्थ्यं दुर्वारमिति वाच्यम्, तत्तदर्थघटकसाध्येपि तत्पदव्यतिरेकप्रयुक्त स्वानुयोगिक तत्पदार्थप्रतियोगिक तात्संसर्गानुभवाभावकत्वे सतीत्यस्य निवेश्यत्वात् । साध्ये एतद्दलानिवेशेघटः कर्मत्वमित्यादौ कर्मत्वरूपार्थे एतद्दलनिर्वाहेण तद्विशिष्टसाध्यवत्त्वासम्भवाद्व्यभिचारप्रसक्त्या तद्वारकतया हेतावेतद्दल सार्थक्यात् । तद्दलेच प्रथमस्वपदमाकांक्षावत्त्वेनोपादेयं यद्विशेष्यवाचक तत्तत्पदं तत्परम् । चरमंच स्वपदं पूर्वोक्तार्थपरम् ।

इदन्तुबोध्यम्-घटःकर्मत्वमित्यादावेत द्विशेष्यदलप्रमादन्वयबोधवारणाय प्रकृतिप्रत्ययार्थान्वयबोधे प्रकृतिप्रत्ययानुपूर्वी विशेषज्ञानस्य हेतुताया आवश्यकत्वान्न्यायमते प्येतद्दलज्ञानं न शाब्दबोधहेतुः; तथाच कथमस्य हेतुप्रवेशः । एवं वैशेषिकमतेन्वयानुभवस्यानुमिति रूपतया तत्रपदस्या हेतुतया तद्व्यतिरेकोनान्वयानुभवाभावप्रयोजकः । एव तदभाव

(?) इति वाच्यम् , तथासति कर्मत्वं घटसंसर्गि एतत्कर्मत्वपदस्मारितत्वादित्यत स्सतोऽसतोवानुमानात् कर्मत्वादौ घटादिसंसर्गसिद्ध्या वैशेषिकमतेऽपि घटः कर्मत्वमित्यादावप्याकांक्षाया दुर्वारत्वात् । तस्मात् घटमानयतीत्यादौ कर्मत्वकृत्यादि रूपविभक्त्याद्यर्थे नामधात्वाद्यर्थ घटानयनादे स्संसर्गविशेषसाधने [न] तन्नामधात्वादिपदप्रकृतिक तत्तत्सुप्तिङादिपदस्मारितत्वं हेतूकरणीयम् । सामान्यव्याप्तौच यत्त्वतत्त्वेनपदानां निवेशेनामत्व धातुत्वादिनानिवेशः कार्यः । अन्यत्सर्वं पूर्ववत् । यदि नामधात्वादिपदानां नामत्व धातुत्वादिना ज्ञानं विनापि न्यायमतेपि संसर्गसिद्धिः, तदायमपि प्रकारोनसाधीयान् । घटपदत्वाम्पदत्वादिनानामपदसुप्पदादीनां निवेशेच घटपदप्रकृतिकाम्पदान्तरस्मारितार्थान्तरेपि येन तादृशपदस्मारितत्वरूपसाधन घटपदतात्पर्यविषयसंसर्गरूपसाध्यंवा न गृहीतं तस्य घटमित्यतः कर्मत्वे घटसंसर्गसिद्ध्यनुपपत्तिः, दृष्टान्ताभावादितिदूषणं बोध्यम् ।

आदिपदात्तत्तदर्थनिरूपितयोग्यतासत्त्योः परिग्रहः । पदनिष्ठयोग्यता च स्वाबाधिततत्तदर्थप्रतियोगिकतात्संसर्गकं यत्स्वं तदुपस्थापकत्वम् । स्वपद पूर्वोक्तार्थपरं । स्वाबाधितत्वंच स्वनिष्ठाभाव प्रतियोगित्वप्रमाविषयत्वाभावः, स्वनिष्ठाभावाप्रतियोगित्वमेववा । योग्यतानिवेशात्तदर्थप्रतियोगिकतत्पद तात्पर्यविषयतत्संसर्गकत्वाप्यशून्ये तत्पदाकांक्षासि मत्पदस्मारितार्थे न व्यभिचारः । पदनिष्ठासत्तिः तत्पदार्थोपस्थित्य व्यवहितस्वोपस्थितिजनकत्वं । एतच्च योग्यतातः पृथङ्गनिवेश्यं, निरुक्तयोग्यताघटकार्थोपस्थिता वव्यवहितान्तविशेषणप्रवेशा देवोपपत्तेः । अन्यथोपस्थापकत्वस्य द्विधानिवेशेनगौरवात् । हेतावेतन्निवेशात् नीलोघटोद्रव्यं पटइत्यादौ व्यवहितोपस्थितिविषय नीलपटादेः स्संसर्गस्य तात्पर्यविषयत्वे अबाधितत्वे चाकांक्षायोग्यतामात्रघटितहेतु

(?) अत्र काश्चनपङ्क्तय उच्छिन्ना अस्मदुपलब्धेषु सर्वेष्वपि पुस्तकेष्विति तथैवात्र मुद्रितम् ।

ज्ञानात्तत्सिद्धिप्रसंगस्य नावकाशः । तादृशविशेषणस्य व्यभिचारवारकत्वानुरोधेनच तदर्थोपस्थित्यव्यवहितोपस्थितिविषयत्वेसतीति साध्येनिवेशनीयं । साध्ये तद्विशेषेचासत्तिघटितसाध्यस्यतादृशार्थेऽसत्त्वेन व्यभिचारप्रसक्त्या तद्वारकत्वेन हेतुस्थ तद्विशेषणसार्थक्यात् । उक्त स्थले प्यव्यवहितोच्चरित प्रथमान्तनीलपदसाकांक्ष प्रथमान्तपदजन्य घटोपस्थितेर्यत्र तावद्निराकांक्ष भिन्नविभक्तिक तदव्यवहितपदान्तर जन्य नीलोपस्थित्याव्यवधानं तत्र नीलघटयोरभेदसंसर्गसिद्धिवारणाय साकांक्षत्वं पदविशेषणम् । तत्पदजन्यत्व मव्यवधानप्रतियोगिन्यां हेतुस्थासत्ति घटकोपस्थितौ निवेश्यम् । तत्सार्थक्याय साध्यस्था सत्ति घटकतादृशोपस्थितावपि तन्निवेश्यमिति संक्षेपः ।

अथ निराकांक्षस्थले ऽनासन्नस्थले च केवलयोग्यता घटितलिंगे व्याप्तिपक्षधर्मता ज्ञानसत्वे शाब्दबोधानंगीकर्तृभिर्नैयायिकैरप्यानुमानिक संसर्गधीरवश्य मुपेयतएव, तथा च तत्र तत्र संसर्गसिद्धिवारणाय हेता वाकांक्षासत्ति प्रवेशनं तत्सार्थक्याय साध्ये तत्प्रवेशनंचायुक्त मित्यप्येतदर्थप्रतियोगिके तात्संसर्गवा नेतत्संसर्गघटिते तत्पदार्थयोग्यता वत्पदस्मारितत्वादित्येवानुमान मुचितमिति चेत् ? निराकांक्षादिस्थले आकांक्षाघटित लिंगकानुमाना द्वाक्यार्थज्ञानस्योभयसिद्धत्वे प्याकांक्षादिमद्वाक्यज्ञानादवगते वाक्यार्थे श्रुतोयमर्थइति व्यवहारो ननु तदन्यशब्दज्ञानादवगतइति नियमनिर्वाहाय हेतावाकांक्षाप्रवेशन मुचितम् । तथाच यादृशशब्दज्ञाना च्छाब्दबोधः परेषां तादृशशब्दलिंगकानुमिति सामग्र्या अनुमितिरितिन्यायनयमः । एवं च तादृशसामग्री जन्यत्वानुसन्धानं विनापि तथा व्यवहारात्तादृशसामग्रीणामननुगमाच्चानुमिति व्यावृत्तानुगतशाब्दत्व जातेरेवतादृशव्यवहारनियामकत्व मावश्यकमितितु सिद्धान्तनिगर्वः ।

प्रथमहेतु प्रविष्टनिरुक्त पदविशेषणासत्ति योग्यताशरीरघटका व्यवहितोपस्थितिविषयत्वरूप स्वाबाधित तदर्थसंसर्गकत्व रूपार्थनिष्ठा

योग्यतासत्तिमत्त्वेसति-संसर्गपरपदस्मारितत्वाद्वा । अनाप्तोक्ते योग्यताविरहा न्नव्यभिचारः, तत्र बाधकसत्त्वात्, तज्जन्यज्ञानस्य भ्रमत्वात्।

---

सत्ति योग्यतारूप तदुभयसहित साकांक्षपदस्मारितत्वस्य हेतुतायां लाघवमित्याशयेन तथैव हेतुतामाह (योग्यतेति) अत्रापि संसर्गपरपद स्मारितत्व प्रविष्टहेतावेवा व्यवहितान्तविशेषणं देयं, नतु तद्विशेषण विशेषितोपस्थिति विषयत्वस्य पृथक् निवेशः, स्मृतिविषयत्वस्य द्विधा निवेशेन गौरवात । संसर्गपरत्वं च पूर्वहेतुस्थं संसर्गघटिताकांक्षा वत्त्वमेव, तद्घटकविशेष्यदला प्रवेशे पूर्वोक्तदोषस्य दुर्वारत्वात । अन्वयप्रयोजकरूपवत्त्वं योग्यतेत्यभिमानमूलां तादृशयोग्यतावत्त्व बाधि तत्व रूपयोग्यताशून्ये व्यभिचाराशंकां निरस्यति ( अनाप्तोक्त इति ) सदोषपुरुषेण तात्संसर्गवत्तया बुबोधयिषिते संसर्गशून्ये तदन्वयप्रयो जकरूपवत्पर्पं इत्यर्थः ( योग्यताविरहादिति ) हेतुघटकेत्यादिः । तत्रहेव कुतोनास्तीत्याकांक्षाया माह ( तत्रेति ) तथा च बाधक प्रमा विरहरूपयोग्यतैव हेतु प्रविष्टेति भावः । नन्वन्वय प्रयोजक रूपात्मकयोग्यताधीरेव शाब्दधीहेतुः, नत्वपरं साधारणबाधकप्रमाविर हधीः, तस्य वाक्यार्थधीपूर्वं तज्जन्यज्ञानस्य भ्रमत्वावधारणात्; तथा च परैरप्यन्वय प्रयोजकरूपस्यैव हेतु घटकतावाच्या, तत्यश्चोक्तस्य लेऽपि सत्त्वेनव्यभिचारो दुर्वारएवेत्याशंक्याह ( तज्जन्यज्ञानस्येति ) तथा च यद्यन्वयप्रयोजक रूपात्मकयोग्यताज्ञानस्य शाब्दधी हेतुता तदातत्र शाब्दभ्रमानुपपत्तिः, शाब्दभ्रमे योग्यताभ्रमरूपदोषस्य हेतु त्वात्तादृशयोग्यताया श्चोक्तस्थलेऽसत्त्वेन तद्भ्रमासम्भवादिति बाधकप्रमा विरहरूपयोग्यतैव शाब्दधीप्रयोजिका; तस्या स्संशयसाधारणधिय एव हेतुताया वाच्यतया प्रथमं तदनिश्चयताया अकिञ्चित्करत्वात . अतः

एकाकारवाक्यस्यापि बाधकसत्त्वासत्त्वाभ्यां यो ग्यायोग्यत्वात् ।

अथ—प्रतिपत्तुर्जिज्ञासा प्रतियोग्यता, सा च श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावरूपाकांक्षा, बाधकप्रमाविरहो योग्यता, अव्यवहितसंसर्गप्रतियोगिज्ञानमासत्तिः, ताश्च स्वरूपसत्यो हेतवः,

परमतेपि सैव लिङ्गविशेषणमिति न व्यभिचार इतिभावः । ननु – पय साग्निं सिञ्चतीत्यादि वाक्यं स्थिरजलपरं यदा योग्यं स्यात् तदा जलान्तरपरमपि योग्यं न स्यात्, एकानुपूर्वीकवाक्ये उभयव्यवहारविरहा दित्याशंकां बाधिताबाधितरूपार्थभेदेनैकानुपूर्वीकवाक्येपि योग्यायोग्यव्यवहारस्येष्टतया निराकरोति (एकेति) "बाधकसत्त्वासत्त्वाभ्यां"–विभिन्नार्थयो र्बाधाबाधाभ्यां । आकांक्षादीनां पूर्वानुमाने ज्ञातोपयोगितया व्यवस्थापितत्वेपि पुनस्तस्या असम्भवमाशंक्य निराकरोति ( प्रतिपत्तुरिति ) यस्य पुंसश्शाब्दबोधो जननीयः तस्येत्यर्थः । एतत्स्वरूपकथनं । " श्रोतरी " त्याकांक्षाया आत्मनिष्ठतया हेतुत्वलाभाय । शब्दनिष्ठतया हेतुत्वे एकपुरुषनिष्ठशाब्दबोधानुत्पादमादायान्यस्य शाब्दबोधेजातेपि. तत्प्रसङ्गात् ( तदुत्पाद्येति ) तत्तत्पदविषयक तदनुसन्धान जन्यप्रकृतसंसर्गबोधप्रागभाव रूपेत्यर्थः ( आकांक्षेति ) तदनुसन्धानावच्छिन्न तत्तत्पदयोराकांक्षेत्यर्थः । अस्याश्च विषयासिद्धिरूप जिज्ञासायोग्यतारूपत्वं, संशयविरोधिसाधकबाधकमानाभावस्य संशययोग्यतात्ववत् ( बाधकेति ) प्रकृतसंसर्गबाधकेत्यर्थः ( अव्यवहितेति ) प्रकृतसंसर्गनिरूपकैकार्थोपस्थित्यव्यवहितार्थोपस्थितिरित्यर्थः ( स्वरूपसत्योहेतवइति ) स्वरूपसत्त्वेन

नतु ज्ञाताः, गौरवात्; तद्बोधंविनान्वयानुभवे विलम्बाभावात्, संसर्गनिरूप्यत्वेन प्रथमं दुरवधारणत्वाच्च, - इतिनता लिंगविशेषणमितिचेन्न;- योग्यताशून्येऽपि तदभिमानेनसंसर्गप्रत्ययात् ।

---

ज्ञानविषयतामपुरस्कृत्यैव शाब्दबोधहेतवइत्यर्थः । कार्यान्वये प्रागभावस्यानुमित्यादौच प्रतिबन्धकबाधनिश्चयाभावस्य विशिष्टबुद्ध्यन्तरे विशेषणस्यच स्वरूपसतएवहेतुताया इष्टत्वादितिभावः । नन्वेकत्रयस्य यादृशस्य हेतुता, अन्यत्रापि तस्य तादृशस्यैव हेतुत्वमितिनियमइत्यतआह ( गौरवादिति ) तद्विषयकज्ञानत्वेन ज्ञानविषयत्वेनवा हेतुत्वापेक्षया स्वरूपमात्रेण हेतुत्वे लाघवादित्यर्थः । ज्ञानव्यतिरेकेण कार्यानुत्पादे ज्ञानहेतुताकथं गौरवेणनिराक्रियतइत्यत स्तदसिद्धिमेवाह ( तद्बोधंविनेति ) तत्ताकांक्षादिज्ञानव्यतिरेकेणेत्यर्थः । " विलम्बाभावात् "- अनुत्पत्तेरसिद्धेः । "संसर्गनिरूप्यत्वेन"-वाक्यार्थभूतप्रकृतसंसर्गघटितत्वेनेत्यर्थः । " ताः "- आकांक्षायोग्यतासत्तयः ( लिंगविशेषणमिति ) भवन्तीति शेषः । तथाऽपि तज्ज्ञानशून्यकाले संसर्गानुमित्यसम्भवेन शाब्दप्रमित्यन्तरस्यावश्यकतापातादितिभावः । स्वीयबाधग्रहाभावएव स्वरूपसन् हेतुः, योग्यताच स्वपरसाधारणबाधप्रमाभावएव, नत्वसौ तथा, तथात्वेऽयोग्यस्यापीदृशविशेषे ऽबोधकतापत्तेरित्याशयेन प्रथमं योग्यताज्ञानस्य हेतुत्व व्यवस्थापयति ( योग्यताशून्येऽपीति ) वह्निनासिञ्चतीत्यादाविति शेषः । " तदभिमानेन "- योग्यताभ्रमेण । " संसर्गप्रत्ययात् "- न्यायमते शाब्दसंसर्गभ्रमात् । तथाच शाब्दज्ञानसामान्ये स्वरूपसत्यायोग्यतया नहेतुत्वं सम्भवति, अपितु भ्रमप्रमासाधारणतज्ज्ञानस्येतिभावः । ननु योग्यताशून्यस्थले संसर्गशाब्दधी

 

अन्यथा शाब्दाभासोच्छेदप्रसंगः । राजा पुत्रमाकांक्षति पुरुषंवेतिसंशये विपर्ययेच वाक्यार्थधीप्रतिबंधाच्च ।

---

नोपेयतद्वैरस्यतआह ( अन्यथेति ) तत्र संसर्गशाब्दबोधानंगीकार इत्यर्थः ( शाब्दाभासोच्छेदप्रसंगइति ) शाब्दभ्रमोच्छेदापत्तिरित्यर्थः । योग्यस्थलीयशाब्दबोधस्य प्रमात्वनियमादयोग्यस्थले शाब्दबोधानुपगमे शाब्दभ्रमस्थलाभावः । योग्यताया मीदृशयुक्तिः- तत्र योग्यताया उपयोगित्वमुभयसिद्धं, ज्ञातायास्स्वरूपसत्याया वा तथात्वमित्यत्रैव विवादइत्याशयेनाभिहिता । योग्यतास्थलीयो बाधनिश्चयाभावस्त्वनिश्चयशाब्दहेतुरितिच दुच्यते, तदानैतदुत्स्यावकाशइतिबोध्यं । अन्वयानुभवप्रागभावपक्षान्वयानुभवे स्वरूपसन् हेतुः, तद्रूपाकांक्षा न लिंगविशेषणं, अपितु समभिव्याहाररूपैत्याशयेनाकांक्षा निश्चयहेतुतायां युक्तिमाह ( राजेति ) राजपदं पुत्रपदसाकांक्षं, किंवा न तत्साकांक्षं अपि तु पुरुषपदसाकांक्षमिति संशयेसतीत्यर्थः ( विपर्ययेचेति ) राजपदं न पुत्रपदसाकांक्षमिति विपरीतनिश्चयइत्यर्थः । " वाक्यार्थधीप्रतिबन्धात् "- राजपुत्रान्वयबोधानुदयात् । तथाच यत्संशयव्यतिरेकनिश्चयाभ्यां विरहादिव्याप्तिमत्सा दाकांक्षा निश्चयहेतुत्वसिद्धिरितिभावः ।

इदमुपलक्षणं - अन्वयप्रतियोग्युपस्थिते स्वरूपसत्त्या हेतुत्वे व्यासत्रस्थलेऽपि क्रमिकोपस्थितीनां शाब्दबोध प्राक्काले असत्त्वेन सर्वत्र समूहालम्बन तावत्पदार्थोपस्थिते श्शाब्दबोध प्राक्काले सत्त्वोपयतया गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यनासत्तस्थलेऽपि समूहालम्बन सर्वाकारे शाब्दबोधस्सुघट इत्यासत्त्यानासत्त्यस्थलयोरविशेषः, अतः क्रमिकोपस्थितीना मव्यवधानरूपाया आसत्ते र्ज्ञानमवश्य कारणमुपेयम्, अतस्तस्या हेतुप्रवेशेऽपि न दोषः, शाब्दबुद्धौ पदार्थस्मृते रुक्तयुक्त्या ज्ञानापेक्षाव्यवस्थितौ स्मारितत्वस्य हेतु प्रवेशेऽपि नविरुद्धयत इत्यपि बोध्यम् ।

योग्यतायाश्च संशयसाधारणं ज्ञानमात्रंहेतुः ।
स्वपरबाधकप्रमाविरहः

---

ननु समभिव्याहाररूपाकांक्षाशरीरे तत्तत्पदार्थत्वेनैवा न्वयप्रति योगि घटितासत्तिशरीरेपि प्रकृतसंसर्गांनिवेशेपि विशेषणस्य प्रकृत ससर्गविशेष्यावाधितत्वरूपयोग्यता ससर्गघटितत्वेन शाब्दबोधात्पूर्वं दुरवधारैव, नच ससर्गघटितत्वेपि निरुक्तयोग्यता नैकपदार्थसंसृष्टापर पदार्थरूपविशिष्टवाक्यार्थघटितेति प्रथमन्तद्रवधारणं सम्भवतीतिवाच्यं, विशेष्यविशेषणससर्ग सन्देहदशायां तत्संसर्गेपि विशेष्यनिष्ठाभाव प्रतियोगित्वसशयस्यौ चित्यावर्जिततया तादृशाभावा प्रतियोगित्व रूपावाधितत्वस्य दुर्निश्चयतया तन्निश्चयस्य शाब्दबुद्धावपेक्षितत्वे उक्त सशयानन्तरं शाब्दबोधानुपपत्ते र्दुर्वारत्वा दिति मुनमावारयति ( यो ग्यतायाश्चेति ) ( संशयसाधारण मिति ) संशयसाधारणरूपावच्छिन्न मित्यर्थ' ( ज्ञानमात्रमिति ) मात्रपद कात्स्न्यार्थकम् । तथा च प्राग्र संशयदशायां योग्यताया दुर्निश्चयत्वेपि योग्यतासंशया च्छाब्दबोधो त्पत्त्या शाब्दबोधे तस्या ज्ञातोपयोगित्वं निराबाधमिति भावः । शाब्द बोधे नैयायिकै स्संशयसाधारणतज्ज्ञानहेतुतास्वीकारेपि वैशेषिकमते नुमितौ तन्निश्चयापेक्षा दुर्वारैव, हेतुमत्ता निश्चयस्यानुमिति हेतुत्वा, दिति संशयकाले तेषा मते ससर्गज्ञानानिर्वाहइति तन्मते दूषण स्वयमग्रेवक्ष्यत । संशयाभावे स्वीयबाधकप्रमाविरहस्य स्वस्मिन् बाधकप्रमाया मसत्वा निश्चयसम्भवेपि परकीयबाधक प्रमासशयस्य दुरुच्छेदतया बाधकप्रमाविषयत्व सामान्याभाव रूप योग्यता विषये न निश्चेतुं शक्यते, तत् कथमुक्त सशयसाधारणज्ञान मात्रं हेतुरित्याशङ्कामपनेतुं क्वाचित्कं तादृग्योग्यतानिश्चयसम्भव मुप पादयति " स्वपरेत्या " दिना । " स्वपर बाधकप्रमाविरहः "- विशेष्ये विशेषणससर्गाभाव प्रमाविषयत्वसामान्याभाव', विशेषणसंसर्गे विशे

क्वचिन्निश्चीयतेपि, यथा — इहघटोनास्तीत्यत्र, स्वयोग्यानुपलब्ध्या घटाभावनिश्चयेना न्यस्यापि घटप्रमाविरहो निश्चीयते । क्वचिद्बाधकप्रमामात्र विरहसंशयेप्यन्वयबोधः,बाधसंशयस्यादूषणत्वात् ।

---

ष्यनिष्ठाभाव प्रतियोगित्व प्रमाविषयत्वाभावयोर्वा ( क्वचिदिति ) विषये कदाचिदिति शेषः ( इहघटोनास्तीत्यत्रेति ) एतादृश शाब्दबोधपूर्व काल इत्यर्थः (स्वयोग्यानुपलब्ध्येति) 'स्वस्य'- प्रतिपत्तुः । प्रतियोगिसत्त्व प्रसञ्जितप्रतियोगिकत्वरूप योग्यतावत्याभूतले घटानुपलब्ध्या कदाचि त्स्वस्य घटाभावरूपलिंगनिश्चयेन ( अन्यस्यापि घटप्रमाविरह इति ) स्वपरसाधारण घटप्रमाविषयत्वाभावरूप योग्यतेत्यर्थः । " निश्चीयते "- अनुमीयते । घटाभावस्य घटप्रमाविषयत्व सामान्याभाव व्याप्यत्वा दिति भावः । घटाभावस्येव तत्संसर्गस्याप्यभावो घटस्वरूपएवेति घटप्रमाविषयत्वाभावस्य घटाभावशाब्दबोधौपयिकयोग्यतात्वम् । विशे ष्येविशेषणाभाव प्रमाविषयत्वाभावो योग्यतेति निष्कृष्टमतानुसारेणेद मुक्तम् । प्रत्यक्षादिसिद्धे शाब्दबोधाविरोधितया प्रात्यक्षिक घटाभावनि श्चयानन्तरमपीह घटोनास्तीति शाब्दबोधसम्भवो बोध्यः । ननु बाधक प्रमाविषयत्वाभाव रूपयोग्यतासंशयस्य बाधकप्रमाविषयत्व रूपबाधवि षयकतया विशिष्टज्ञानविरोधितया योग्यतासंशयात् कथंशाब्दनिश्चय इत्यतआह (क्वचिदिति) "प्रमामात्र विरहसंशये"-ग्राह्याभावप्रमाविषयत्व सामान्याभावसंशये । "अन्वयबोधः"-शाब्दसंसर्गनिश्चयः ( बाधसंशय स्येति ) ग्राह्यसंशय पर्यवसितस्येतिशेषः ।"अदूषणत्वात्"-परोक्षनिश्चया विरोधित्वात् । ग्राह्यसंशयकाले शाब्दानुमित्योः स्वसंवेद्यानुभव सिद्धत्वा दित्यर्थः । ननुयोग्यतायाः शाब्दबोधंप्रति स्वरूपसत्तया अपि हेतुता नोपेयतइत्यतो न शाब्दभ्रमानुपपत्तिरिति तज्ज्ञानहेतुत्वं निर्युक्तिकम् ,

किंच तत्रापि योग्यतादिकं प्रामाण्ये प्रयोजकं, आप्तोक्तत्वस्य तथात्वे गौरवात् , अनाप्तोक्तेपि संवादेनप्रामाण्याच्च । एवंच ज्ञायमानकरण प्रामाण्यप्रयोजकतया तद्वत्ता ज्ञानमावश्यकमिति तासां ज्ञानं हेतुः ।

---

अयोग्यतानिश्चयदशायां लौकिकसन्निकर्षाजन्यविशिष्टबुद्धि सामान्य हेतु बाधनिश्चयाभावविरहादेव शाब्दबोधानुत्पत्त्युपपत्तेरित्याशंक्य, योग्यताज्ञानादीनां शब्दनिष्ठप्रामाण्यप्रयोजकत्वं व्यवस्थाप्य, तेन लिंगेन तज्ज्ञानहेतुतां व्यवस्थापयति " तत्रापी " त्यादिना । " योग्यतादिक " मित्यादिपदा दाकाङ्क्षासत्तिपरिग्रहः । " प्रामाण्ये " – शाब्दप्रमाकरणत्वपर्यवसिते । नन्वनाप्तोक्त शब्दवारणायैव योग्यता प्रमाणतावच्छेदककोटौ निवेशिता, तत्स्थाने आप्तोक्तत्वमेव किं ननिवेश्यत इत्याशंकां निरस्यति " आप्तोक्तत्वस्ये " त्यादिना । "तथात्वे"– प्रामाण्यप्रयोजकत्वे ( गौरवादिति ) भ्रमप्रमाद विप्रलिप्साकरणापाटवरूपदोषचतुष्टयशून्यत्वरूपाप्तत्वस्यापि गुरुभूतिकतयावच्छेदकगौरवादित्यर्थः । –

ननु प्रकृतवाक्यार्थ यथार्थज्ञानवत्त्वमेवाप्तत्वं, न तु दोषचतुष्टयशून्यत्वमिति न गौरवमित्यत आह ( अनाप्तोक्तइति ) वाक्यार्थज्ञानशून्य शुकाद्युक्तेपीत्यर्थः । " संवादेन "– वाक्यार्थज्ञानस्या बाधेनेत्यर्थः । तथा च तत्साधारण्यविरहेण नाप्तोक्तत्वस्य तथात्वमिति भावः । " एवं च "– मिलितस्य योग्यताकांक्षादेः प्रामाण्यप्रयोजकत्वे च । " तासां ज्ञानं हेतु " रित्यग्रिमेणास्य सम्बन्धः । कुतइत्याकांक्षायामाह ( ज्ञायमान करण इति ) ज्ञायमानत्वेन यत्करणं तन्निष्ठं यत्प्रामाण्यं तत्प्रयोजकं, ज्ञायमानत्वावच्छिन्न प्रमाकरणत्वावच्छेदकमिति यावत् । " तद्वत्ताज्ञानं "– तद्रूपप्रकारकज्ञानम् । " आवश्यकं "–तत्प्रमायामवश्यं कार

तच्च समभिव्याहारविशेषादिनेति ।

मैवं—यत्र विमलंजल मित्यश्रुत्वैवनद्याःकच्छेमहिषश्चरतीति शृणोति तत्राकांक्षादिकमस्ति, नच नदीकच्छयोः

---

णम् । अत्र ज्ञायमानत्वादिरूप विशेष्यतावच्छेदकतापर्यं वसन्न्यामप्रमाकरणतावच्छेदकं तत्तत्प्रमाकरणतायांप्रकारितासम्बन्धेनावच्छेदकमिति समुदितार्थः । प्रत्यक्षप्रमाकरणतावच्छेदकज्ञायमानत्वस्यच ज्ञानं नतत्प्रमाहेतुरिति तत्रव्यभिचारवारणाय ज्ञायमानत्वरूपावच्छेदक विशेष्यतावच्छेदकत्वनिवेशः । ज्ञायमानत्वस्य तद्विशेष्यतावच्छेदकतापन्नस्य न करणतावच्छेदकत्वमिति न तत्र व्यभिचारः । योग्यतादेश्च ज्ञायमानत्व विशेष्यतावच्छेदकतयैव शाब्दबोधकरणतावच्छेदकत्वान्नासिद्धिः । अनुमितौ च लिंगस्य ज्ञायमानत्व विशेष्यतावच्छेदकतापन्नेन व्याप्त्यादिमत्त्वरूपलिंगत्वेन करणतया व्याप्त्यादिरत्र दृष्टान्ततयोध्या । क्वाचित्क योग्यतादिविषयतया सिद्धसाधनवारणाय जनक ज्ञानप्रकारत्व मुपेक्ष्य प्रकारतया जनकतावच्छेदकत्व रूपसाध्यादरः । साध्यसाधनशरीरेपरत्वतत्त्वेन प्रमात्वनिवेश्य प्रमात्वेनैव निवेशे योग्यतादि हेतुकानुमिति जनकज्ञान विषयतया सिद्धसाधनं स्यादिति सामान्यमुखव्याप्त्याशाब्दप्रमायां तज्ज्ञानस्य हेतुतासिद्ध्यर्थं यत्त्वतत्त्वाभ्यां तन्निवेशः । "तच्च"-शाब्दबोधप्राक्काले नियमत आकांक्षादिज्ञानञ्च ( समभिव्याहा [ रवि शेषा ] रादिनेति ) तद् घटकसमभिव्याहारादि ग्राहकप्रकरणादिनेत्यर्थः ( तत्राकांक्षादिकमस्तीति ) जलमित्यन्ताश्रवणेन जलेन सह नद्यन्वयबोधानुत्पत्त्या नदीकच्छपदयो रजनितान्वयबोधकत्वरूपाकांक्षादिकमस्तीत्यर्थः ; जलमित्यन्ताश्रवणं नदीजलान्वयबोधकारणान्तराभावस्याप्युपलक्षणं ( नचेति ) नास्तित्यर्थः ( नदीकच्छयोरिति )

संसर्गइतिव्यभिचारात् । अतएव नतन्मात्रं प्रयोजकं प्रामाण्ये ।

अथ यावत्समभिव्याहृतत्वस्यापि लिंगविशेषणं, कतिपयस्मारिणस्तु संसर्गप्रत्ययो लिंगाभिमानादितिचेन्न;—तत्संदेहेपि वाक्यार्थावगमात् ।

---

आकाङ्क्षादिमत्पदस्मारितेत्यादिः ( संसर्गइति ) मिथइत्यादिः । तात्पर्यविषयइतिशेषः । अन्यथा नदीकच्छयोः स्वसंसर्गाभावाभावेन व्यभिचाराप्रवृत्तेः (व्यभिचारादिति) तात्पर्यविषयसंसर्गघटितसाध्याभावादिति भावः । नन्वेवमाकाङ्क्षादिमत्त्वस्य संसर्गतात्पर्यविरहेण प्रमानुत्पादकत्वादर्शनात् व्यभिचारेण..., अत्र...पदद्वयसाधारण्येनातिप्रसक्ततयाप्रामाण्यप्रयोजकत्वमपि नस्यादित्यत्र व्याप्त्याप्रसमाधत्ते ( अत एवेति ) संसर्गतात्पर्यविरहेण तत्राप्रामाण्यादेरित्यर्थः । "तावन्मात्र"– तात्पर्यसहिताकाङ्क्षादित्रयम् । नदीपदसमभिव्याहृतपदाश्रवणस्थले प्रदर्शित व्यभिचारमुद्धर्तुं हेतु घटकपदे विशेषणान्तर प्रवेशमाशङ्कते ( अथेति ) यावत्समभिव्याहृतत्व-श्रूयमाण स्वसमभिव्याहृत यावत्पदक त्वम् । "लिंगविशेषण"– पदविशेषणतया लिंगघटकम् । तथा च तत्र नदीपद समभिव्याहृत जलपदस्य श्रूयमाणतया प्रोक्तविशेषणघटितहेतुः नद्यापदार्थइति न व्यभिचारइति भावः । नन्वेतद्विशेषणप्रवेशे शोभन घटमानयेत्यादौ घटादिपदसमभिव्याहृत शोभनादिपदाश्रवणेपि ज्ञायमानस्य घटकर्मत्वादिसंसर्गस्य भवन्मतेनुपपत्तिः, घटादिपदस्य उक्तविशेषणानाक्रान्ततया तत्स्मारित घटाद्यर्थे उक्तलिंगाभावादित्यत आह ( कतिपयेति ) ( लिंगाभिमानादिति ) उपदर्शित हेतो स्तत्रासत्त्वेपि तद्भ्रमादित्यर्थः । यत्र श्रूयमाण पद समभिव्याहारस्य प्रकृतपदे सन्देहादिः तत्रोक्तलिंगस्य न भ्रम सम्भवइति तत्रापि श्रूयमाणपदस्मारितार्थान्वय संसर्गबोधोत्पत्त्योक्त विशेषणप्रवेशासम्भवइति दूषयति ( नतदिति ) समभिव्याहृतपदा

तत्र संसर्गभ्रांतिरितिचेन्न;— अन्यकारणाभावे पदमेवभ्रांतिजनकं, तथाचादुष्टं सत्तदेवाभ्रांतिं जनयत्केनवारणीयं । असंसर्गाग्रहइति चेन्न;— संसर्गबाधकाभावात् ।

अथ - आप्तोक्तत्वं लिंगविशेषणं,

---

न्तर सन्देहस्थले संसर्गभ्रमानासम्भवेन शब्दस्य संसर्गबोधकत्वोपगमेपि तत्र बाधितसंसर्गस्यैव बोधोऽभ्युपगम्यतइति प्रमारूपसंसर्ग बोध जनकत्वं शब्दस्य न सिद्धमिति कुतस्तत्प्रामाण्यमिति शंकते (तत्रेति) (अन्यकारणाभाव इति) उक्तस्थल इत्यादिः। सतीति शेषः। संसर्गभ्रमस्य कारणान्तराऽसत्वेनेत्यर्थः। "भ्रान्तिजनकं"-भ्रान्तिकरणं, स्वीकरणीयम्। "अदुष्टं"- संसर्गबाधरूप दोषासमवहितम् 'तदेव'- पदरूपकारणमेव। " भ्रान्ति "- संसर्गभ्रमाम् । ननूक्तस्थले संसर्गबोधस्वीकार एवोक्तयुक्त्या शब्दस्यप्रामाण्यसिद्धिः, स एव न स्वीक्रियते, अपि त्वसंसर्गाग्रहमात्रं, इत्याशंकते ( असंसर्गाग्रहइति ) यत्र संसर्गबोध आनुभाविकः तत्र बाधकसत्वेन तदनुपपत्ते रनुभवापलापोयुक्तः, ननु कथञ्चित्तदुपपत्तौ, प्रकृतेऽपि शब्दप्रामाण्यबाधकविरहेण तदुपपत्त्या नानुभवापलापसम्भवइति दूषयति ( नेति ) विमतञ्जकामित्यादौ व्यभिचारस्य हेतौ परस्पर समभिव्याहारेण उभयपदार्थयो र्मिथस्संसर्गतात्पर्येणवा घटितायाः आकांक्षाया निवेशेन वारणसम्भवात् यपनिव त्यादिना योग्यताघटितहेतौ सर्वत्र निश्चयासम्भवरूप दुरुद्धरदोषेण वैशेषिकमतं स्वयं निराकरिष्यते, प्रकारान्तरेणोक्त व्यभिचारोद्धार माशंकते ( अथेति ) ( आप्तोक्तत्वमिति ) यत्पदार्थे यत्पदार्थसंसर्ग वत्वं साध्यं तत्पदार्थ इव संसर्गविषयक यथार्थज्ञानव त्पुरुषोच्चारितत्वमित्यर्थः। ताद्दशज्ञानजन्यत्वमितिवा... । " लिंगविशेषणं "-

तदेवचलिंगं, नच नदीकच्छयो स्संसर्गे आप्तोक्तत्वं, आप्तोक्तत्वञ्च प्रामाण्ये तंत्रमिति तद्वत्तया ज्ञायमानस्य हेतुत्वेन तत्र ज्ञानमावश्यकं, व्याप्तिमत्तया ज्ञातस्यैव लिंगस्य,

---

लिंगघटक परस्पराकांक्षादि मत्पदविशेषणमित्यर्थः । " तदेवच "- आकांक्षादिकं परित्यज्य शाब्दआप्तोक्तत्ववत्पदस्मारितत्वमेवच ( लिंगमिति ) तथाच स्वार्थानुयोगिक यत्पदार्थ प्रतियोगिकसंसर्गविषयक यथार्थज्ञानजन्य पदार्थस्मारितो योर्थ स्स तात्पर्यविषय तत्पदार्थ संसर्गवा नित्येव सामान्यव्याप्तिरूपगन्तव्या । अत्र घटः कर्मत्वमित्यादि निराकांक्षस्थले नासत्त्वस्थलेच तात्पर्यसत्त्वे साध्यसत्त्वा त्सम्बन्ध तात्पर्यासत्त्वे सतात्पर्यवाक्यपद संसर्गज्ञानस्य जनकतयासंसर्गज्ञानाजन्यत्वेन, अयोग्यस्थले यथार्थसंसर्गनिश्चयाभावेन हेत्वसत्त्वाद्व्यभिचाराप्रसक्त्या,आकांक्षाद्युपादानमनर्थकमितिभावः । प्रकृतं व्यभिचारमुद्धरति ( नचेति ) नहीत्यर्थः । " नदीकच्छयो स्संसर्गे "- नदीकच्छसंसर्गघटितं । आप्तोक्तत्वं, नदीकच्छपदार्थयो रस्तीतिशेषः । तथाचोक्तहेत्वभावा न्न व्यभिचारइतिभावः । शाब्दप्रामाण्यमते आप्तोक्तत्व ज्ञानस्य शाब्दसंसर्गज्ञानहेतुत्वेन तदज्ञानदशायां संसर्गज्ञानानुदयेन शाब्दप्रामाण्यमावश्यकंस्यात् , एतन्मतेपि तज्ज्ञानहेतुताव्यवस्थापयति ( आप्तोक्तत्वञ्चेति ) " प्रामाण्ये " – शब्दप्रामाण्ये । " तन्त्रे "- प्रयोजकं । " इति "- अतः । " तद्वत्तया "- आप्तोक्तत्व प्रकारेण । " ज्ञायमानस्य " – शब्दस्य । " हेतुत्वेन "- शाब्दबोधजनकत्वेन । " आवश्यक "- शाब्दज्ञानेपेक्षितं ( लिंगस्येति ) हेतुत्वेनापेक्षितमनुषज्यते । अत्र हेतुत्वेनेत्यस्यानुमितिहेतुत्वेनेत्यर्थः ।

ननु वाक्यार्थगोचर यथार्थज्ञानवदुक्तत्वरूप माप्तोक्तत्वं वाक्यार्थज्ञानात्पूर्वं दुर्ग्रहं, तज्ज्ञानयाथार्थ्यग्राहकस्य तज्ज्ञानजन्यप्रवृत्तिसंवादादेः

तदवगमश्च लोकेभ्रमाद्यमूलकत्वेन, महाजनपरिग्रहेण वेदे स्मृतौ च, इति चेन्न;—यत्रकुत्रचिदाप्तत्वमनाप्तस्यापि । सर्वत्राप्तत्वमप्रसिद्धं, भ्रांतेः पुरुषधर्मत्वात् । प्रकृतवाक्यार्थे यथार्थज्ञानवत्त्वं चाप्तत्वं प्रथमं दुर्ग्रहं, भ्रमाद्यमूलकत्वस्य प्रवृत्तिसंवादादेश्च तद्ग्राहकस्याज्ञानात् ।

---

पूर्वमग्रहादिति कथमनुभयमते तदपेक्षोऽत स्तद्ग्राहकमाह ( तदवगमश्चेति ) तन्निश्चय इत्यर्थः । "लोके"- लौकिकवाक्ये । "भ्रमाद्यमूलकत्वेन" – भ्रमादिरूपवक्तृदोषाप्रयोज्यत्वे सति वाक्यार्थज्ञानवक्तृत्वेन, तेन शुकादिवाक्यव्युदासः । "महाजनपरिग्रहेण" – शिष्टानां कर्तव्यतया वेदबोधितयागाद्याचरणेन, शिष्टाचारविषयार्थप्रतिपादकत्वेनेति यावत् । एतच्च उक्तभ्रमाद्यमूलकत्वस्याप्युपलक्षणम्, तस्यापि वेदेऽभावात् । आप्तत्वं विकल्प्य दूषयति ( यत्र कुत्र चिदिति ) वाक्यार्थ इति शेषः । यत्किंचिद्वाक्यार्थगोचरयथार्थज्ञानवत्त्वमित्यर्थः । "अनाप्तस्यापि"- बाधितवाक्यप्रयोक्तुरपि ( सर्वत्राप्तत्वमिति ) स्वज्ञातयावद्वाक्यार्थगोचरयथार्थज्ञानवत्त्वमित्यर्थः । (अप्रसिद्धमिति) ईश्वरयोगिभिन्ने कुत्रापि न प्रसिद्धमित्यर्थः । "भ्रांतेः"- किंचिदर्थभ्रान्तत्वस्य । "पुरुषधर्मत्वात्"- प्रायेण समस्तपुरुषसाधारणत्वात् ( दुर्ग्रहमिति ) ग्राहकाभावेनेत्यादिः । तथा च वाक्ये आप्तोक्तत्वमपि ग्राहकाभावेन दुर्ग्रहमिति भावः । ननूक्तमेव भ्रमाद्यमूलकत्वादिकं तद्ग्राहकमित्यत आह ( भ्रमेति ) ( प्रवृत्तिसंवादेति ) संवादिप्रवृत्ति प्रयोजकत्वेत्यर्थः । "अज्ञानात्"-वाक्यार्थज्ञानात्पूर्वं निश्चेतुमशक्यत्वात् । वस्तुतः प्रकृतवाक्यार्थज्ञाने कथंचित् ज्ञातेऽपि तत्र प्रथमतो

प्रवृत्तिश्च संदेहादपि ।

किञ्च—प्रकृतवाक्यार्थेयमभ्रांतो यथार्थ ज्ञानवान्वेति संसर्ग मप्रतीत्य ज्ञातुमशक्यं, वाक्यार्थस्यापूर्वत्वात् ।

वयंतु ब्रूमः – बाधकप्रमाभावोयोग्यता,

---

भ्रमत्वशंकासम्भवेन तत्र याथार्थ्यस्य दुरवधारणत्वात्, प्रवृत्तेः पूर्वं प्रवृत्तौ संवादस्य च तथात्वादिति भावः ।

नन्वेवं शब्दप्रामाण्यपक्षेऽपि तदधीनवाक्यार्थज्ञाना त्प्रवृत्त्यनुपपत्तिः, तादृशज्ञाने जातेऽपि घटज्ञानइव तत्रापि प्रामाण्यसंशयसम्भवा, न्निश्चित प्रामाण्यकज्ञानस्यैव तत्त्वात् , प्रवृत्तिपूर्वं प्रामाण्यनिश्चायकस्य संवादि प्रवृत्तिजनकत्वरूपलिंगस्य निश्चेतुमशक्यत्वा, दित्याशंक्य; सन्दिग्धप्रामाण्यकतया संशयोत्पादेऽप्यर्थज्ञानात्सकम्पाप्रवृत्तिर्भविष्यति, तस्याश्च संवादित्वं गृहीत्वा तज्जनकज्ञाने प्रामाण्यं निश्चित्य तदुत्तरकालश्च च निष्कम्पं प्रवर्ततइति समाधत्ते ( प्रवृत्तिश्चेति ) आस्तांवस्या पूर्वंप्र कृतवाक्यार्थ घटितत्वा तस्य तदुक्तत्वस्यच साध्याप्रसिद्ध्याप्यनुमाने- न दुर्ग्रहत्वमित्याह ( किञ्चेति ) ( वाक्यार्थेऽभ्रान्तइति ) भ्रमाभावा वच्छेदक पदार्थसंसृष्टापरपदार्थ ज्ञानवानित्यर्थः । " यथार्थज्ञानवा " नित्यत्रापि ' प्रकृतवाक्यार्थे ' इत्यनुषज्यते । तथाचैकपदार्थसंसृष्टा परपदार्थविषयक तत्संसर्गज्ञानवानित्यर्थः । उक्तरीत्यादर्शितहेतौ व्यभि चारवारणसम्भवा त्स्वयं दूषणान्तरमाह ( वयन्त्विति ) ( बाधकप्रमा भावइति ) विशेष्यविशेषणसंसर्गाभावप्रमाया विशेषणसंसर्गे विशेष्य इत्यभावप्रतियोगित्व प्रमायावा विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिता

साच न लिंगविशेषणं, बाधकप्रमामात्रविरहस्य सर्वत्र निश्चेतुमशक्यत्वात्, तत्संशयेपि शब्दादन्वयबोधाच्च । शब्दप्रामाण्येतु योग्यताया स्संशयनिश्चयसाधारणं ज्ञानमात्रं प्रयोजकमिति शब्दः प्रमाणमिति ।

---

कोऽभावइत्यर्थः ( नाऽलिंगविशेषणमिति ) लिंगं चेतिशेषः । यत्तद्वा त्पदार्थसंसर्गाभावस्य स्तत्र सर्वत्र लिंगतावच्छेदकतया लिंगतया वा नानुमिति निर्वाहकमित्यर्थः ( प्रमामात्रविरहस्येति ) बाधकप्रमासामान्यविरहस्येत्यर्थः ( सर्वत्रेति ) शाब्दसंसर्गाभावस्थल इति शेषः । उक्तरीत्या क्वचिन्निश्चयसम्भवेन सर्वत्रेत्युक्तं ( निश्चेतुमशक्यत्वादिति ) लिंगतावच्छेदकांशे लिंगांशे वा संशयरूपपरामर्शस्यानुमितिजनकत्वादितिशेषः ।

ननु साध्यसंशयस्यानुमित्यनुगुणतया तदन्यसंशयभेदस्यैवानुमित्यौपयिकनिश्चयत्वघटकत्वोपगमात् योग्यतांशे संशयादपि परामर्शादनुमितिर्निष्प्रत्यूहेतिवाच्यं; साध्याभावकोटिकसंशयान्यत्वेन साध्याभावातिरिक्तस्वपरविरोधिप्रकारकान्यत्वेनवा नुमितिहेतुत्वोपगमे निश्चितस्वव्याप्तिक सन्दिग्धसाध्यकपक्षलिंगात्सर्वत्र साध्यनिश्चयापत्तेः । नच साध्याभाववद्वृत्तित्वरूपव्याप्तिज्ञानस्य लिंगतावच्छेदकाविषयकस्याप्यनुमितिहेतुतया लिंगतावच्छेदकांशे संशयत्वमकिंचित्करं, तथाच संदिग्धयोग्यता घटितधर्मावच्छिन्नोक्तलिंगादप्यनुमितिर्निराबाधा; एवं बाधाभावरूपयोग्यतायां बाधसंशयस्थले आहार्याभावत्वेन दुर्निश्चयत्वेपि व्याप्यत्वेन निश्चयसंभवात् योग्यताहेतुकापि संसर्गानुमितिः स्संभवतीतिवाच्यं; हेतुतावच्छेदकस्य पक्षवृत्तौ संदेहे पक्षेहेतुतावच्छेदकविशिष्टसन्देहस्यौचित्यावर्जिततया व्याप्यतावच्छेदक विशिष्टपक्षतानिश्चयं विनापक्षे केव

द्व्याप्यत्वपुरस्कारेणापि व्याप्यवत्त्वनिश्चयासंभवा द्विरोधिनिश्चयासत्त्वेन व्याप्यवत्त्वस्य भानेबाधकाभावात्। अतएव पर्वतीयहेतौ अयंधूमो धूलीपटलोवेति सन्देहे हेत्वंतरस्यालोकादेरनिश्चये न पर्वतवह्न्यनुमितिः। अयमालोको धूमोवेति संशयस्थले व्याप्यतावच्छेदकतया गृहीतान्यतरत्वादिना पक्षे धूमादिनिश्चया नंतरमेवानुमितिः।

अथ माभूत्सर्वत्र योग्यताया स्तद्घटितहेतोर्वा निश्चयः, तथापि तद्निश्चयस्थले निश्चयोपयोगितयास्वीकृतात्तादृशपक्षधर्मलिङ्गादेव संसर्गानुमिति स्संभवति; अनुमानञ्च कर्मत्वादिकं घटादिसंसर्गि घटादिसंसर्गितया बुबोधयिषितत्वादित्याकारं, नच घटादिसंसर्गशून्यस्याप्यर्थस्य तात्संसर्गितया भ्रांतस्य प्रतारकस्यवा बुबोधयिषा तद्विषयत्वादुक्तलिङ्ग व्यभिचारीति कुतस्तत स्संसर्गानुमितिसम्भवइति वाच्यं, तादृशव्यभिचारास्फूर्ति दशायां भ्रमात्मक तल्लिङ्गधर्मिकव्याप्तिज्ञाना तास्फूर्तिदशायां च भ्रमाद्यनधीनत्वादि रूपविशेषणावच्छिन्न बुबोधयिषाविषयक व्याप्तिप्रमातोनुमिति सम्भवात् ; तदानीं बुबोधयिषो भ्रान्तत्वादिसंशये तादृशविशेषणनिश्चयासम्भवेपि नक्षतिः, तदानीं नैयायिकाभिमत संसर्गप्रत्ययस्योत्पादेपि तत्र भ्रमाधीनवाक्यजन्यत्वसंशयेन प्रामाण्यसंशया ततः प्रवृत्त्याद्यनिर्वाहा तत्र संसर्गबोधस्यानभ्युपगमसम्भवात्। नचैवं क्वचिदेकपदार्थे परपदार्थसंसर्गानुमिति सम्भवेपि नैयायिकमतसिद्धस्यैकपदार्थांशे साक्षात्पदार्थांतरप्रकारकबोधस्य समानाकारानुमिति र्नसंभवति, क्वचित्पदार्थस्यैव साध्यत्वोपगमेन तदुपपादनेपि घटाभावकर्मत्वादौ नञ् विभक्त्यार्थयो र्घटादेर्वृत्त्यनियामकानुयोगित्वाधेयत्वादि संसर्गभान तत्र तादृशसंसर्गस्य व्यापकत्वावटकत्वेन तेन सम्बन्धेन घटादिप्रकारकत्वेनाभावादिभानं दुर्घटमेवेतिवाच्य, वृत्त्यनियामकसंसर्गस्याभावप्रतियोगितानवच्छेदकत्वेपि व्यापकताघटकसम्बन्धेन प्रतियोगिवैय्यधिकरण्य घटितव्याप्तौ तत्सम्बन्धावच्छिन्न प्रतियोगित पर्यंता निवेशा द्वृत्त्यनियामकसम्बन्धस्यापि व्यापकताघटकत्वसम्भवात्। नन्वेवं माकांक्षाया वाक्यार्थबोधानुपयोगितया साकांक्षानाकांक्षयो रविशेषेणघट

कर्मकानयादि - प्रत्यायनेच्छया घटमानयेत्यादिवद् घटःकर्मत्वमानय
नमित्यादिकमपि व्युत्पन्नैः प्रयुज्येतेतिवाच्य, नैय्यायिकमतेपि निरा
काङ्क्षपदेभ्यः पदार्थोपस्थिता चैकपदार्थे परपदार्थानुमितिसम्भवेन दर्शि
तप्रयोगस्य दुर्वारत्वात । तात्पर्यरूप हेतु स्वाकांक्षत्व ज्ञानादेव झटिति
गृह्यतइति साकांक्षमेववाक्यं प्रयुज्यतइति समाधानस्य च तुल्यत्वादि
ति चेत ? सत्यम्, तथापि व्याप्तिज्ञानविरहदशायामपि न्यायमते पदे
भ्यस्तत्तदर्थसंसर्गबोधा त्तदानीमनुमित्यसम्भवेन शब्दस्य पृथक् प्रमा
णत्वमावश्यकम् । सर्वत्रैव व्याप्तिग्रहः कल्प्यते, सामग्र्यन्तरकल्पना
पेक्षया क्लृप्तसामग्रीकल्पने लाघवादिति चेत ? तथापि घटकर्मकानय
नानुकूल कृतिमच्चैत्रादिरूप विशेषणपरम्पराघटित वाक्यार्थस्थले यत्र
न्यायमते वाक्यार्थबोध मन्तरेणैव विशेष्येविशेषणमिति रीत्या
महावाक्यार्थ बोधः तत्र वैशेषिकमते कर्मत्वानयनादौ क्रमेण क्रमेण
घटकर्मत्वाद्यनुमित्युत्पत्त्यैव विशिष्टसाध्यप्रसिद्धिनिर्वाहा च्चैत्रेणैव ताद
शवाक्यार्थबोध इति वैषम्यम् । नहि विशिष्टसाध्यप्रसिद्धिमन्तरेण
विशेष्येविशेषणस्य तत्र च विशेषणान्तरस्य व्याप्यत्वज्ञाना त्समूहाल
म्बनरूपा द्विशेष्येविशेषणमित्यादिरीत्या विशिष्टविशेषण समूहालंबनानु
मिति सम्भवः, तादृशव्याप्यत्वज्ञान समुदायस्य विशिष्टबाधाभाव सह
कृतस्य विशिष्टविशेषणकानुमिति सामग्रीत्वे पर्वतोवह्निव्याप्यवानभाव
व्याप्यवांश्च, अभावश्च वह्नित्वावच्छिन्न प्रतियोगिताकाय व्याप्यवानिति
समूहालम्बनात्पर्वतो वह्निमान्नवेति संशयानुमित्यापत्तेः । ज्ञानव्याप्यवानी
श्वरः ज्ञानंच जन्यत्वव्याप्यवदिति प्रमापरामर्शादीश्वरादौ बाधाभावघटित
जन्यज्ञानादिप्रसंगात । अभावत्व सामानाधिकरण्येन साध्यीयत्वभासक
लिंगज्ञानसहितापक्षे अभावसाध्यकलिंगज्ञाना द्व्यतिरेकिसाध्यके
सर्वत्र सत्प्रतिपक्षसम्भवेनानुमानस्य तादृशसाध्यसिद्ध्युच्छेदापत्तात ।

सामान्यव्याप्त्या अप्रसिद्धिविशेषसिद्धिरित्यपि न संभवति, घट
कर्मकानयनकृत्यादि रूपविशिष्टवाक्यार्थाप्रसिद्धौ तत्तात्पर्य घटित
लिंगे पक्षधर्मताज्ञानासंभवात ।

किंच शाब्दस्य विलक्षणानुभवस्यानभ्युपगमे ऽयमर्थःश्रुत इति व्यवहारविषयस्या शक्यनिर्वचनता स्यात् । श्रुधातो रनुमित्यर्थकत्वे धूमादिलिंगकानुमिति मादाय यत्रपर्वते वह्निरनुमित इतिव्यवाह्रियते तत्रापि श्रुतइति व्यवहारापत्तिः । नच शब्दलिंगकानुमिते श्रुधात्वर्थतया नायमतिप्रसंगइतिवाच्यम्, शब्दलिंगकाकाशपदवाच्यत्वानुमिति मादाय तादृशवाच्यादौ श्रुतइति व्यवहारापत्तेः । स्मारितत्वसंबंधेन शब्दस्य लिंगताया स्तदर्थघटकत्वे व्याकांक्षादिज्ञानजन्यकालीनां तादृशसंबंधेन पदलिंगकानुमिति मादाय तद्विषये श्रुतव्यवहारापत्तेः । नैयायिक सिद्धसामग्री समवहितोत्तरानुमितेःश्रुधात्वर्थत्वे तादृशसामग्री प्रतिसंधानाभावे तथाविध व्यवहारानुपपत्तिः, शाब्दधीभेद भिन्नानां सामग्रीणामननुगमेन व्युत्पत्त्यनुपपत्तिश्च ।

एतेन श्रुधातोः श्रावणप्रत्यक्षमेवार्थः, कर्मप्रत्ययस्य च श्रूयते शब्द इत्यादौ प्रतिपत्त्यनुबन्धिविषयताविशेषार्थकत्वेपि अयमर्थः श्रुतइत्यादौ व्यापारानुबंधिविषयतैवार्थः, उच्यते- उक्त इत्यादौ तादृशविषयताया अपिकर्मप्रत्ययार्थतायाः क्लृप्तत्वात्, श्रावणप्रत्यक्षीया नुमित्यात्मकव्यापारविषयतायाश्चार्थे सत्वाच्छ्रुतइत्यादि व्यवहारस्सर्वोपपद्यत इतिनिरस्तं; उपदर्शितानुमिति मादाया तिप्रसंगस्य दुर्वारत्वात् । घटाद्दृष्टोघटइत्यादि प्रयोगेण विषयमुद्रया हेतुतातोविलक्षणायाएव हेतुतायाः पञ्चम्यर्थतया चैत्रवाक्याच्छ्रुतोयमर्थइत्यादौश्रुवः श्रावणप्रत्यक्षार्थकत्वे श्रावणप्रत्यक्षे वाक्यस्य विषयत्वेपि तद्विलक्षणहेतुताविरहेण पंचम्यनुपपत्तिश्च । नच कर्मप्रत्ययार्थघटकज्ञाने वाक्याधीनत्वान्वयबोधेन पंचम्युपपत्तिरितिवाच्यं, तादृशज्ञाने हेतुपञ्चम्यर्थस्यान्वये तादृशज्ञानस्यानुमिति रूपस्य व्याप्त्याद्यधीनतया व्याप्तेश्श्रुतइत्यादि व्यवहारापत्तेः । तस्माच्छाब्दोविलक्षणानुभवएव अर्थःश्रुत इत्यत्र श्रुवोर्थइति तत्स्वीकारआवश्यकः । नच तत्स्वीकारेपि श्रावणप्रत्यक्षमेव शृणोत्यर्थः, तज्जन्यशाब्दानुभवविषयत्वरूपं

व्यापारानुबन्धिविषयत्वमेव कर्मप्रत्ययार्थोऽस्त्विति वाच्यं; तथासति शाब्दबुद्धेरधिकविषयकतया गुरुशरीरस्य तादृशशाब्दानुभवविषयत्वविषयक शाब्दत्वस्य तत्पदाकांक्षादि ज्ञानकार्यतावच्छेदकतया गौरवप्रसंगात्, शाब्दबुद्धावेवधातोश्शक्त्यंतरकल्पनौचित्यात् ।

अथास्तु शाब्दोविलक्षणानुभवः, सोप्यनुमितिविशेष एवेत्यनुमाने शब्दान्तर्भावः; नच तादृशानुभवेनुमितित्व न प्रत्यक्षसिद्धं, प्रत्यक्षान्यानुभवत्वलिंगक त्वनुमानंचा प्रयोजकमितिवाच्यं, शाब्दानुभवेनुमितित्वोपगमे समानविषयकप्रत्यक्षसामग्र्या अनुमितौ क्लृप्तप्रतिबंधकतयैव तादृशसामग्रीकाले शाब्दबोधवारणे शाब्दबुद्धित्वावच्छिन्न प्रति तादृशसामग्र्याः प्रतिबंधकत्वा कल्पन लाघवोपष्टंभानुमानादेव शाब्दबोधेनुमितित्वसंभवात्; नच शाब्दत्वानुमितित्व प्रकारकेच्छयोः पृथगुत्तेजकत्वानुरोधेन प्रतिबंधकताभेदआवश्यकः, एकत्रद्विविधेच्छोत्तेजकत्वोपगमे शाब्दत्वप्रकारकेच्छाबलादसत्यां शाब्दसामग्र्यां शाब्दान्यानुमित्यापत्तेरितिवाच्य, यत्रविषये प्रत्यक्षसामग्रीकाले शाब्दत्वप्रकारकेच्छावशात् शाब्दबोध स्तादृशानंतरविषये शाब्दबोधे तात्समानविषयक प्रत्यक्षसामग्र्याः प्रतिबंधकत्वान्तराकल्पने लाघवस्यानपायात् । एवं वैशेषिकमते समानविषयक * त्वने लाघवमितिचेन्न, शाब्दत्वस्यानुमितित्वव्याप्यत्वे शाब्दसामग्र्या व्याप्यत्वादिज्ञान घटितत्वया गुरुशरीरत्वेन भिन्नविषयक प्रत्यक्षादौ तत्प्रतिबंधकतायामवच्छेदक गौरवात् । लिंगादिभेदनैकदविषय एवन्यायमतापेक्षया शाब्दसामग्री बाहुल्येन प्रतिबंधकताबाहुल्याच्च ।

अथ यथान्वयव्यतिरेकि लिंगकानुमित्यो स्सामग्रीभेदेप्येकजातीयता तथा व्याप्तिज्ञाननिरपेक्षपदज्ञानादि घटितसामग्र्याश्शाब्दानुभवजनकत्वेपि तस्यानुमितिजातीयत्व मंविरुद्धमिति वैशेषिकैरपि व्याप्यादिज्ञानस्य शाब्दसामग्रीघटकत्वं नोपगतव्यम्, अन्वयव्यतिरेक

* अत्र कियानपि ग्रंथ पतितः ।-

व्याप्तिज्ञानयोः परस्परजन्यानुमिताविव शाब्दबोधेनुमितित्वस्वीकारेपि तत्रव्याप्तिबुद्धेः व्यभिचारस्य तदव्यवहितोत्तरत्वस्य तत्कार्यतावच्छेदकत्वेनैव वारणात्, अनुमितित्वावच्छिन्न प्रत्यभावज्ञानत्वेन व्याप्ति ज्ञानस्य करणत्वा दाकांक्षाज्ञानादिजन्यतावच्छेदकगर्भे नुमितित्वा प्रवेशेपि शाब्दसामग्र्या अभावज्ञानरूपानुमितित्वावच्छिन्न करणघटितत्वेन तज्जन्यबोधस्यानुमितित्वोपपत्तेः । नच पक्षतायाःशाब्दबोधे व्यभिचारवारणाय पक्षता जन्यता वच्छेदककोटौ शाब्दान्यत्वं वैशेषिकैः प्रवेश्यमितितन्मते गौरवमितिवाच्यं, तल्लिंगकेच्छाविरहविशिष्टसिद्ध्य भावरूपायाः पक्षताया अन्यलिंगकानुमितौ लिंगानुपधानमते व्यभिचार वारणाय जन्यतावच्छेदककोटौ अव्यवहितोत्तरत्व संबंधेन तादृशा भावविशिष्टसिद्ध्यवच्छिन्नभेदस्यावश्यं निवेश्यतया शाब्दबोधेपि तत एव व्यभिचारवारणात् । परामर्शाजन्यज्ञानेऽनुमितित्व मपसिद्धांतभये नाभ्युपगमनार्हमितिचेन्न;- पक्षताया अजन्येनुमितित्ववादिनां परामर्शाजन्येनुमितित्वमपि नापसिद्धांतः । एतेन यादृशसंसर्गेण यादृशपदार्थस्य क्वचिदपि न निश्चयः एव तत्संबंधावच्छिन्न तदभावस्यापि न क्वचिन्निश्चय. तादृशपदार्थस्य तत्संसर्गविषयकबोधो नानुमानात्रिर्वहति, अन्वयव्यतिरेक दृष्टांतविरहेण व्याप्यवधारणासंभवात्; नच सामान्यव्याप्त्या अप्रसिद्धस्यापिसिद्धेः रुक्तत्वा द्वेषमिति वाच्यम्, प्रकृतसाध्यव्याप्तेः प्रकृतहेतौ विशिष्टपरामर्शासम्भवे नानुमिते रनिर्वाहादिति परास्तम् ।

मेवं, व्याप्तिज्ञाननिरपेक्ष शाब्दजातीयबोधस्वीकारेपि बाधकाभावात्, अनुमितेरेव तादृशविशेषत्वं किं न स्वीक्रियत इत्यत्र विनिगमकस्यापि दुर्लभत्वात । तथासत्यपि समानविषयक प्रत्यक्षसामग्र्या एकैक प्रतिबन्धकतानिर्वाहेण दर्शितलाघवप्राप्तेः । पदज्ञानस्यापि शाब्दबोधे पदविषयकत्वमनिवेश्य ज्ञानत्वादिना कारणतासम्भवात । एकैकविध शाब्दप्रयोजकानुपूर्वी विशेषरूपाकांक्षादीना मननुगततया

तज्ज्ञानजन्यतावच्छेदके तद्व्यवहितोत्तरत्वस्यावश्यं निवेशनीयतया
नुमितौ तद्व्यभिचारानवकाशात् । नचैकपदार्थेपरपदार्थरूपयोग्यताया
एकैकविधतया एकैकविधशाब्दधीप्रयोजकतया तज्ज्ञानजन्यतावच्छेदके
तज्ज्ञानाव्यवहितोत्तरत्वनिवेशनं नोभयोरावश्यकमिति वाच्यम्, बाध
निश्चयाभावस्य क्लृप्तहेतुतयैव निर्वाहे योग्यताज्ञानहेतुताया एव शाब्द
बुद्धावसिद्धेः । प्राचीनैरनुमितावपि संशयसाधारणविशेषण संसर्ग
ज्ञानहेतुतास्वीकारात् योग्यताज्ञानस्यानुमितौ व्यभिचारानवकाशाच्च ।
अनुमितेश्शाब्दधीविशेषत्वमतेऽनुमिनोमीत्यनुव्यवसायस्थाने शृणोमीत्य
नुव्यवसायवारणमपि शाब्दबुद्धेरनुमितिविशेषत्वे, शृणोमीत्यनुव्यव
सायस्थानेऽनुमिनोमीत्यनुव्यवसायरीत्यैव सम्भवति । अनुमितित्वस्य
शाब्दत्वव्याप्यत्वे पदज्ञानघटितसमानविषयक विशेषसामग्रीकालेऽनु
मितिवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकत्व कल्पनाधिक्यमिति
चेत्; शाब्दत्वस्यानुमितित्व व्याप्यतामतेऽपि समानविषयेऽनुमित्साविशिष्ट
परामर्शादिसत्त्वे शाब्दबोधवारणाय तत्र परामर्शादिघटित सामग्र्याः
प्रतिबन्धकताधिक्यम् । तत्रशाब्दबोधात्मकानुमितेरेतन्मतेऽभ्युपगमे
विपरीतमते प्युक्तस्थलेऽनुमित्यात्मक शाब्दस्वीकारस्संभवतीति न
सामग्रीप्रतिबंधकताधिक्यम् । एतन्मते तत्रानुमित्यात्मक शाब्दबो
धस्वीकारे ऽनुमिनोमीत्यनुव्यवसायापत्तिस्तु न, शाब्दत्वस्यानुमितित्व
व्याप्यतामते प्यनुमित्साविशिष्टानुमिति सामग्रीदशायां शाब्दात्म
कानुमिति स्वीकारे शृणोमीत्यनुव्यवसायापत्ति संभवादित्यलमति
विस्तरेण ।

मीमांसकमते उक्तयुक्तिभिश्शाब्दानुभवो ऽनुमिति विजातीयएव,
सत्सामग्र्याऽऽकांक्षाज्ञानघटिताविलक्षणी । किंतु लौकिकशब्दोऽन प्रमाणं,
तज्जन्यशाब्दबोधपूर्वं मनुमानेन तद्विषयकवाक्यार्थग्रहात् तादृशशाब्दबो
धस्य गृहीतग्राहित्वेनानुवादरूपत्वा दगृहीतग्राहिणस्वज्ञानस्य, प्रमा
त्वात् । नचैवमनुमितेः परामर्शगृहीत साध्यपक्षादिमात्र ग्राहित्वात्म

जरन्मीमांसकास्तु—लोके वक्तृज्ञानानुमाना
त्तदुपजीविसंसर्गानुमानाद्वा

---

मात्रानुपपत्तिरिति वाच्यम्, स्वाव्यवहितस्वपूर्ववर्तिस्वसमानाधिकरण निश्चयक यत्तदन्यत्वमगृहीतग्राहित्वमेव प्रमालक्षणमिति परामर्शस्यानु मिति विषयसाध्यतावच्छेदकावच्छिन्न विशिष्टपक्षतावच्छेदकावच्छिन्ना विषयकत्वेनानुमिति विषयसकलवस्तु विषयकत्वेपि तदन्यूनाकारतावि रहेणानुमितेः प्रमात्वोपपत्तेः । प्रमाणन्तु वेदरूपशब्दएव, तत्प्रतिपाद्यो यादृशविशिष्टार्थः स्तस्य शाब्दशब्दोपजीविप्रमाणभिन्न प्रमाणागम्यत्वेन वेदजन्यशाब्दबोधात्पूर्वं प्रमाणान्तरेणाग्रहणात् । लोकेत्वनुमानाधीन वाक्यार्थज्ञानस्य शाब्दबोधसामग्रीसमवधाने नपेक्षितत्वेपि स्वसामग्री वशादेवनियमतो वाक्यार्थगोचरानुमिति श्शाब्दबोधात्पूर्वं जायतइति प्राचोमीमांसकावदन्ति । गुरवस्तुविशिष्टवाक्यार्थज्ञानं विनाशाब्दबोध सामग्र्येव दुर्घटेति यथार्थतात्पर्यज्ञानस्य शाब्दबोधकारणताव्यवस्थापने नैवोपपादयन्ति । तत्रानायासेन जरन्मीमांसक मतनिराकरणसम्भवा

त्तदेव मतमादावुपन्यस्यति ( जरदिति ) " लोके " – लौकिकवाक्य श्रवणस्थले ( वक्तृज्ञानानुमानादिति ) अयं वक्ता प्रकृतवाक्यार्थ गोचर यथार्थज्ञानवान्, भ्रमाद्यजन्ये सद्वाक्यप्रयोक्तृत्वादित्येतादृशानुमाना दित्यर्थः ( वाक्यार्थसिद्धाविति ) अननसाध्ये याथार्थ्यघटकतयैक पदार्थे परपदार्थसंसर्गसिद्धावित्युक्तम् । तद्धद्विशेष्यक तद्वावगाहित्व रूपयाथार्थ्यशरीरे एकपदार्थधर्मितावच्छेदकतया पदार्थतावच्छेदका तराप्रवेशा देकपदार्थतावच्छेदकावच्छिन्न संसृष्टापरपदार्थतावच्छेदका वच्छिन्न रूपवाक्यार्थस्य याथार्थ्यभाने नियमतो भानानिर्वाह इत्यत आह ( तदुपजीवि संसर्गानुमानाद्वेति ) तादृशवक्तृज्ञानानुमानोपजीवि न एतत्पदार्थ स्तत्पदार्थसंसर्गी तत्प्रकारक यथार्थज्ञानविशेष्यत्वादित्यतः

वाक्यार्थसिद्धौ शब्दस्यानुवादकत्वं, वेदेतु तदभा
वा त्स्वातन्त्र्येण प्रामाण्यमिति वदन्ति; तन्न,
वेदे क्लृप्त सामग्रीतो लोकेऽपि संसर्ग प्रत्ययात् ।
अन्यथानुवादकतापि नस्यात् ।

---

पदार्थपक्षक पदार्थान्तरसंसर्ग साध्यकानुमानान्तराद्धित्यर्थः । " वाक्यार्थ
सिद्धौ "- विशिष्टानुभवग्राह्यवाक्यार्थस्य निश्चये । " शब्दस्य " -
लौकिकवाक्यस्य । " अनुवादकत्वं " - प्रमाणान्तरगृहीतग्राहिज्ञान
जनकत्वम् । नाथगृहीतग्राहिजनकत्वरूपं प्रामाण्यमिति शेषः । " तद
भावात् "- अपौरुषेयतया वक्तु रभावात् वक्तृ वाक्यार्थज्ञानानुमाना
धीनवाक्यार्थं सिद्ध्यभावात् । " स्वातन्त्र्येण "- अगृहीतग्राह्य
नुभवजनकत्वेन ( वेदेक्लृप्तसामग्रीतइति ) वेदजन्यशाब्दबोधे यादृश्या
कांक्षादि ज्ञानघटिता सामग्री क्लृप्ता तादृशसामग्रीत इत्यर्थः । " संसर्ग
प्रत्ययात् "- पदार्थद्वयसंसर्गविषयक वेदजन्यबोधविजातीय संसर्ग
बोधस्यानुमानिक वाक्यार्थनिश्चय विलक्षणोपपत्तेरित्यर्थः । वेदवत्प्रामाण्य,
स्यावश्यकत्वादितिशेषः । ननु लोकवेदयो र्नैकाशाब्दानुभव
सामग्री, वाक्यानुपूर्वीभेदेनाकांक्षाभेदात्, तथाच लौकिकवाक्य
स्थलीयाकांक्षाज्ञानादेः स्वसंसर्गबोधसामग्रीत्वमेव न कल्प्यतइति कथं लौ-
किकवाक्यस्य प्रामाण्यमित्यतआह ( अन्यथेति ) लौकिकवाक्येआकां
क्षादिज्ञानघटितायाः स्वसामग्र्या अकल्पनइत्यर्थः । " अनुवादकता "-
गृहीतग्राह्यनुभव जनकता । तथाच लौकिकवाक्यादपि शाब्दानुभ
वस्यानुभवानुरोधेन परैरपि स्वीकरणीयतया तेषामपिलौकिकस्थले शाब्दा
नुभवसामग्रीकल्पनमावश्यकमितिभावः । ननु शाब्दानुभवानुरोधेन
पद आकांक्षादिमत्त्वज्ञानस्यावश्यकतया पदार्थसंसर्गानुमापकतादृश पद
स्मारितत्वरूपलिंगस्य पदार्थज्ञानमावश्यक मित्यनुमितिसामग्रीसत्वेन

लिंगस्य पूर्वत्वेपि व्याप्तिस्मृतिविळंम्बेन तद्वि
ळम्बात् । अनाप्तोक्तौ व्यभिचारा द्वेदतुल्यापि
सामग्री न निश्चायिकेतिचेन्न;—चक्षुरादे स्तथात्वे-
न तच्छंकायामपि प्रमापकत्वात् ।

---

तात्संभवर्गानुमिति शाब्दबोधात्पूर्वं नियमतोभविष्यति; नच तल्लिंगज्ञा
नघटितानुमितिसामग्रीकाले पदाकांक्षादिमत्त्वज्ञानसत्त्वेन शाब्दसाम
ग्र्याअपि सत्त्वेन तस्यास्समान विषयानुमितिसामग्र्यपेक्षया बलवत्त्वेना
नुमितेरुत्पत्तिर्भवितु मर्हतीतिवाच्यम् . शाब्दबोधे आकांक्षादि मत्पदज्ञान
जन्यपदार्थोपस्थिते र्हेतुतया तद्विलंबेन तादृशशाब्दस्यानुत्पादकत्वस्य
दुर्वारत्वादित्यत आह ( लिंगस्य पूर्वत्वेपीति ) पक्षेलिंगतावच्छेदक प्रका
रेणलिंगस्य निश्चितत्वेपीत्यर्थः ( व्याप्तिस्मृति विळंबेनेति ) उद्बोधक
समवधानानियमेन तद्विरहस्थले व्याप्तिस्मृत्यसंभवेनेत्यर्थः । " तद्वि
ळंबात् "– अनुमानविळंबात्, शाब्दबोध पूर्वकालेनुमित्यनियमादिति
यावत् । शंकते ( अनाप्तोक्ताविति ) अनाप्तोक्तवाक्यइत्यर्थः । " व्यभि
चारात् "– अप्रामाण्यदर्शनात् ( न निश्चायिकेति ) न निश्चयं जन
यितुं समर्थेत्यर्थः । सर्वत्रैव लौकिकवाक्ये भ्रमजनकत्वसहचारिता
कांक्षादि मद्वाक्यत्वरूप धर्मदर्शनेन तत्संशयसंभवा तस्य च फलीभू
तनिश्चय प्रतिबंधकत्वादितिभावः । एवंच लौकिकवाक्ये भ्रमजनकत्व
संशयनिवृत्त्यर्थमाप्तोक्तत्व निश्चयस्स्वीकरणीयः, तस्य च वाक्यार्थनिश्चय
रूपतया तत्पूर्वकस्य शाब्दबोधस्य लोकस्थले गृहीतग्राहित्व नियमइति
शंकितुराशयः । निश्चयसामान्ये यदप्रामाण्यसंशयस्य विरोधितोपे
यते तदाक्षेपमाह ( चक्षुरादेरिति ) "तथात्वेन"–दोषसमवधानदशायां
भ्रमजनकत्वेन । "तच्छंकायामपि"–चक्षुष्ट्वादिरूपसाधर्म्य दर्शनेना प्रा-
माण्यशंकायामपि । " प्रमापकत्वात् " – प्रत्यक्षनिश्चयजनकत्वात् ।

ज्ञायमानं करणं सन्देहे न निश्चायकं, लिंगवदिति
चेन्न;– संशयोहि न वाक्ये, तस्य निश्चयात् ।

---

तथाच व्यभिचारेणाप्रामाण्यसंशयो नप्रतिबंधक इतिभावः । ननु अप्रा
माण्यसंशयाभावस्य निश्चयसामान्ये हेतुत्वासंभवेना ऽप्रामाण्यसंशयस्य
प्रतिबंधकत्वासंभवेपि ज्ञायमानकरणकनिश्चये प्रामाण्यसंशयस्य प्रतिब
धकत्वं संभवतीति शब्दोनतत्संशयदशायां निश्चायकः, ज्ञायमानकरण
त्वात् . व्यभिचारादिसंशयदशायां लिंगमिवेत्याशंकते(ज्ञायमानमिति)यन्न
निश्चये ज्ञायमानत्वेनयत्करणं तत्संदेहदशायां न तन्निश्चयजनकमित्यर्थः ।
( लिंगवदिति ) यथानुमित्यात्मक साध्यनिश्चयकरणभूतं लिंगव्याप्यत्वादि
संदेहदशायां साध्यानिश्चायकमित्यर्थः । एतन्निश्चये संशयसामान्यनिवेशो
न सम्भवति, घटादिसंदेहदशायां धूमादेर्वह्न्यादिबोधकशब्दस्य च
तन्निश्चायकत्वात् । अतः करणधर्मिकसंशयविशेषो निवेश्यः । तत्रच
करणतावच्छेदकस्य ज्ञायमानत्वस्य धर्मितावच्छेदकतया यद्रूपंतया
तत्संशयनिवेशस्संभवति, व्याप्यत्वे स्वत्वानुमिति करणतावच्छेदकत्वात्,
लिंगतासंशयदशायां तस्यानुमापकत्वात्, अतश्शब्दस्य तादृशरूपा
कांक्षादिसंशयेपि न, वाक्येतस्य निश्चयात्, शब्दस्वरूपधर्म संशय
दशायामनिश्चायकत्वमिष्टमेव, आप्तोक्तत्वं गौरवान्नकरणतावच्छेदक,
मितितादृशसंशयान्तर्भावेन नियमपक्षंदूषयति ( संशयोहीति ) प्रकृ
तसाध्यघटकइत्यादिः ( न वाक्यइति ) वाक्यत्वपरम् । तथाच शब्दरूपे
धर्मिण्याकांक्षादिमच्छब्दस्वरूपवाक्यत्व कोटिक इत्यर्थः । " तस्य "–
तादृशवाक्यत्वस्य । " निश्चयात् " – शाब्दनिश्चयपूर्वं वाक्येनिश्चित
त्वादित्यर्थः । तथाच वाक्यत्वस्य शब्दे संशयकाले अनिश्चायकत्वसा
धने सिद्धसाधनमितिभावः । यद्यप्याप्तोक्तत्वनिश्चयस्या प्रामाण्यसं
शयनिवृत्यर्थमपेक्षाया एवशंकितुरभिमतत्वा द्वाक्यत्वसंशयघटितनिय

न तज्जन्यज्ञानप्रामाण्ये, तस्य तदुत्तरकालीन त्वात् । नाप्तोक्तत्वे, तन्निश्चयस्या नंगत्वात् ।

---

मनिराकरणमफलं, तथाप्यनभिप्रेतार्थं मादायापि सामान्यशब्दार्थविल क्षेण तत्पक्षदूषणं संगच्छते । फलीभूतज्ञानधर्मिक प्रामाण्यसंदेहस्य करणे प्रमाकरणत्व संशयपर्यवसायिनः निश्चयविरोधित्वे आप्तोक्तत्व निश्चयापेक्षाया आवश्यकत्वात् तादृशसंशयाविर्भावेण नियमपक्षं दूषयति (तज्जन्यज्ञान प्रामाण्यइति) स्वजन्यज्ञानधर्मिक प्रामाण्यकोटिक इत्यर्थः। प्रकृतवाक्यघटकसंशयइत्यनुषज्यते । "तस्य"-ज्ञानप्रामाण्यसंशयस्य । "उत्तरकालीनत्वात्" ज्ञानरूपधर्मिज्ञाने सत्येव तदुत्पत्तेरौत्सर्गिकत्वात् । तथाच तत्संशयस्य निश्चयविरोधित्वेपि शाब्दनिश्चयपूर्वकाले तत्सत्त्वप्रयु, नियमेन तदनावश्यकत्वात् सर्वत्र तन्निवर्तकाप्तोक्तत्व निश्चयानपेक्षया नह्यो क्तेशाब्दनिश्चयस्य गृहीतप्रामाण्यमितिभावः । प्रामाण्यसंशयस्य ज्ञायमान करणजन्य निश्चयप्रतिबन्धकत्वाभ्युपगमेनैव दुक्तम् । वस्तुत स्तादृशसं शयस्य ग्राह्यसंशयपर्यवसितस्य ग्राह्यसंशयवत्परोक्ष निश्चयाविरोधित्वमे वेतिपक्षिश्चयः स्वकारणकनिश्चया (?) तत्संदेहघटितनियमबलाद् दाप्तोक्त त्वसंदेहस्य शाब्दनिश्चयहेतुत्वस्यैवानुपगमादित्यर्थः । तन्निश्चयस्य हेतुत्वो पगमे तत एवशब्दस्यानुवादकतासिद्धेः प्रयासवैफल्य, तदनुपगमे च यन्निश्चयद्वारादौ, यत्पदेनाप्तोक्तत्वोपादानासंभवात् तत्संशयस्य शाब्दबोधविरोधिता नोक्तनियमात्सिद्ध्यतीतिभावः । ननु - उक्तनियम बलादाप्तोक्तत्वसंशय विरोधिता तद्वत्ता तन्निश्चय हेतुताच मास्तुनाम, तथा प्यात्मोत्पसंशयकाले शाब्दबोधानुत्पादस्यानुभाविकतया तन्निवा हायाप्तोक्तत्वनिश्चयस्य शाब्दबोधेपि हेतुत्वं दुर्वारमेवेति तत्पूर्वं वाक्यार्थं

---

(१) अत्र काश्चनपङ्क्तयः पतिताः ।

ननु– लोके आप्तोक्तत्वसन्देहे वाक्यार्थधीर्नेति तन्निश्चयो हेतुः, तथा च वाक्यार्थगोचर यथार्थज्ञानजन्यत्व ग्राहका त्तदुपजीविनो

---

निश्चयस्यावश्यकतेति शंकते(नन्विति)"लोके"-लौकिकवाक्ये । "सन्देहे"-सन्देहदशायां । "तन्निश्चयः"-आप्तोक्तत्वनिश्चयः । "हेतु." शाब्दबोधकारणं । वाक्यइतिशेषः । तथापि कथमनुवादकता शब्दस्येत्याकांक्षायां शाब्दबोधात्पूर्वं वाक्यार्थज्ञानस्य नियमेनसत्त्वमुपपादयितु मासोक्तत्वस्य प्रकृतवाक्यार्थघटितत्व प्रदर्शयन्नाप्तोक्तत्वग्रहस्यैव वाक्यार्थज्ञानत्वमाह ( तथाचेति ) आप्तोक्तत्वग्रहस्य शाब्दधीहेतुत्वे चेत्यर्थः । ( वाक्यार्थ गोचर यथार्थ ज्ञानेति ) वस्तुगत्यैकपदार्थं संसृष्टो यो परपदार्थ स्तद्गोचरज्ञानेत्यर्थः ( ग्राहकादिति )तज्ज्ञानजनकादित्यर्थः । वाक्यार्थधीरित्यनेनान्वयः । शाब्दबोधात् प्राङ्नियमतइति पूर्व पूरणीय । वाक्यार्थज्ञानंविना वाक्यार्थघटित निरुक्तासोक्तत्वस्य दुर्ग्रहतया प्तोक्तत्वग्रहा त्पूर्वमनुमानांतरादेकपदार्थे परपदार्थ संसर्ग ज्ञानमावश्यक, तदादायापि शाब्दबोधेगृहीतग्राहित्वमक्षतमित्याह ( तदुपजीविन इति)बहुव्रीहिणा तदुपजीव्यादनुमानांतरादित्यर्थः । आप्तोक्तत्वग्रहे वाक्यार्थज्ञानानुमानांतर मनपेक्ष्यैव शाब्दबोधसंभवा तदुपजीवकानुमानांतरादिति यथाश्रुतार्थासंगतेः । वस्तुतो यथार्थज्ञानवदुक्तत्व रूपाप्तोक्तत्वानुमानानंतर तदधीनसंसर्गानुमान नियमतोभवतीत्यभिमानेन तादृशानुमानपरैव तदुपजीविन इत्यादि फक्किका, अतएव वेदस्थले नाप्तोक्तत्वशंकाविरोध्य पौरुषेयत्व निश्चयाधीन संसर्गानुमानमादायानुवादकत्व प्रतिबन्दिप्रदर्शनमप्येतन संगच्छते, उभयत्र संसर्गानुमानस्यैवावश्यकतया तुल्यत्वात् ।

नुमानाद्वाक्यार्थधीरितिचेन्न;- वेदे तद्रहितस्यापि सामर्थ्यावधारणात्, तदनिश्चयेपि वेदानुकारेण पठ्यमान मन्वादि वाक्ये ऽपौरुषेयत्वाभिमानिनो गौडमीमांसकस्यार्थ निश्चयात् ।

---

यद्यपि आप्तोक्तत्वशरीर घटकयाथार्थ्यग्रहस्य विशेषणांशे सधर्मितावच्छेदककत्वानियमाद्विशेषणसंसर्गांशे सधर्मितावच्छेदककस्य शाब्दवाक्यार्थबोधस्य नियमेन गृहीतग्राहित्वानिर्वाह, तदुपजीवक संसर्गानुमानं न शाब्दबोधानुपयोगितयानावश्यकमेव, एवं विशेषणांशे निर्धर्मितावच्छेदककाप्तोक्तत्वग्रहेपि न नियमतस्तादृश सधर्मितावच्छेदककवाक्यार्थग्रहापेक्षायाप्तोक्तत्व ग्रहोपजीव्यनुमानात्तस्मादायापिन शब्दप्रामाण्यभंग., नचाप्तोक्तत्व ग्रहापेक्षणीयानुमानस्य विशेषण संसर्गांशे निर्धर्मितावच्छेदककसंसर्गज्ञानजनकत्वमसंभवि, अनुमितेस्साध्यांशे पक्षतावच्छेदक धर्मितावच्छेदककत्व नियमादितिवाच्यम्, तथापि विशिष्य पदोपस्थाप्यतावच्छेदकावच्छिन्न पक्षकानुमान विनाप्येकपदार्थसंसर्गितया वक्तृज्ञानविशेष्य एतत्पदार्थसंसर्गवान् अन्यतद्दर्शीय तत्पदार्थसंसर्ग ज्ञानविषयत्वादित्यनुमानस्यापि वाक्ये दर्शितास्तोक्तत्व ज्ञानसंभवादिति, तथाप्याप्तोक्तत्व ज्ञानहेतुतामेवासद्मानस्तामेव खण्डयितु प्रथमतोवेदजन्य बोधसाधारण शाब्दत्वावच्छिन्नं प्रतितद्धेतुता व्यभिचारेण निरस्यति (वेदइति) वेदान्तर्गतस्य वाक्यस्याप्तोक्तत्व ग्रहविषयतारहितस्यापि मीमांसकादि शाब्दबोधजनकत्वदर्शनादित्यर्थः । लौकिकवाक्यजन्य शाब्दत्वावच्छिन्न हेतुताया नास्य व्यभिचारस्य विरोधितेत्यालोच्य लौकिकमन्वादिवाक्यजन्यबोध व्यभिचारमाह (तदनिश्चयेपीति) आप्तोक्तत्वानिश्चयेपीत्यर्थ । "गौडमीमांसकस्यार्थनिश्चया दित्यग्रिमेणान्वय. । मन्वादिवाक्य

नचासौ भ्रांतिः, बाधकाभावात् । पौरुषेयत्व निश्चयदशायामपि तस्य तथात्वात् । नचा संसर्गाग्रहमात्रं तत् ,

---

तोगौडमीमांसकस्य शाब्दवाक्यार्थनिश्चयादित्यर्थः । वाक्यार्थ निश्चयात्पूर्वं आप्तोक्तत्वनिश्चयाभाव बाधक ' अपौरुषेयत्वाभि मानिन ' इत्यन्त विशेषणम् । अपौरुषेयत्व मवक्तृकत्वम् , तन्निश्चयो विपरीतनिश्चय विषयाप्तोक्तत्वरूप सवक्तृकत्व विशेषग्रहविरोधित्वा त्तदग्रहसम्पादकः । अपौरुषेयत्व भ्रमनिर्वाहकं मन्वादिवाक्येषु वेदा नुकारेण पठ्यमानत्वविशेषणम् । वेदस्येव स्वरविशेषेणमन्वादिवाक्ये पठ्यमाने तत्र वेदत्वभ्रमो दृढाभिज्ञाप्यो पौरुषेयत्वाभिमान निर्वाहे । दाक्षिणात्य मीमांसकस्याधीतवेदतया सर्वे वेदत्वभ्रमासम्भवात ' गौडे'ति मीमांसकविशेषणम् । मीमांसकत्व च वेदेष्वपौरुषेयत्व निश्चयोपयो- गीत्युपात्तम् । ननु मन्वादिवाक्ये ष्वपौरुषेयत्वभ्रमवत स्तदर्थानाधे निश्चयोपि भ्रमरूपएव, अतो नोक्तव्यभिचारावकाशः, प्रमात्वस्यैवा प्तोक्तत्वनिश्चयजन्यतावच्छेदकतायाः स्वीकरणीयत्वा दित्याशङ्कामिर स्यति ( नचेति ) ' असौ "– उक्तार्थनिश्चय ( बाधकाभावादिति ) विषयबाध विरहादित्यर्थ । ननु व्यभिचारवारणाय तादृशनिश्चये बाधितजातीय बाधितव्यक्तिविषयकत्व मेवोपगन्तव्यमिति शङ्कामिर स्यति ( पौरुषेयत्व निश्चयेति ) आप्तोक्तत्व निश्चयेत्यर्थ । "तस्य"- प्रमारूप तद्वाक्यार्थानार्थ निश्चयस्य । " तथात्वात् " - अपौरुषेयत्वा भिमानकालीन तद्वाक्यजन्यार्थ भ्रमसमानविषयकत्वेनानुभवात् । तथाच प्रमासंवादेन तस्य बाधितविषयकत्वोपगमासम्भव इति भाव ( असं सर्गाग्रहमात्रमिति ) अगृहीतासंसर्गक धर्मधर्मिविषयक स्मरणद्वयम् , नतु पदार्थद्वय संसर्गानुभवरूपमित्यर्थ । " तत् " - तादृश गौड

अर्थस्य —तथाभावेप्यसंसर्गाग्रहत्वे संसर्गोच्छेदापत्तेः। नन्वाप्तोक्तत्वनिश्चयरूपकारणबाधात्संसर्गज्ञानबाधः, व्यभिचारेण हेतुतायाएव बाधात्। लौकिकत्वेन ज्ञाते तदङ्गमितिचेन्न;—मानाभावात्।

---

मीमांसकज्ञानम् । तथा च न तत्र व्यभिचार इति भावः । " अर्थस्य "- वाक्यार्थस्य । " तथाभावेपि "- अबाधितत्वेपि । " असंसर्गाग्रहत्वे "- उक्तासंसर्गाग्रहत्वमात्रोपगमे । " संसर्गग्रहोच्छेदापत्तेः " - शाब्दस्य संसर्गानुभावकत्वोच्छेदापत्तेरित्यर्थः । संसर्गानुभावकत्वमन्तरेणाप्य संसर्गाग्रहा त्मकस्याप्युपपत्तेरिति, भावः । अनुवादकत्वमपि शाब्दस्यन स्यादिति शेषः । नन्वक्तकारणबाधेन प्रकृतसंसर्गग्रहासम्भवेना सा संसर्गाग्रहमात्र मुपेयते, संसर्गग्रहसम्भवेतु मतपरित्याग इत्याशंका, निरस्यति ( नन्वेति ) " संसर्गज्ञानबाधः "- संसर्गग्रहा सम्भवः ( व्यभिचारेणेति ) उक्तस्थले संसर्गज्ञानस्य सविवादत्वेपि व्यभिचार-सन्देहेनेत्यर्थः ( हेतुतायाएव बाधादिति ) शाब्दबोधे आप्तोक्तत्व, हेतुताया एवासिद्धेरित्यर्थः । तथा च तस्य हेतुतासिद्धौ उक्तस्थले तदभावेन संसर्गग्रह रूपकार्याभावसिद्धिः, तत्सिद्धौ च तत्र व्यभिचार शंकानिरासेन तद्धेतुतासिद्धिरित्यन्योन्याश्रय इति भावः । लौकिक वाक्यजन्यशाब्दत्व रूपकार्यतावच्छेदक गर्भे लौकिकत्वस्थले तत्त्वेन ज्ञायमानत्व निवेशान्नव्यभिचारः, उक्तमन्वादिवाक्यस्या पौरुषेयत्व भ्रमविषयतया पौरुषेयत्वरूप लौकिकज्ञानाविषयत्वा दित्याशंकते ( लौकिकत्वेनेति ) " ज्ञाते " - वाक्ये । " तद् " - आप्तोक्तत्वम् । " अंगं "- सहकारि ज्ञानविषयः ( इतीति ) न व्यभिचार इति शेषः । " मानाभावात "- उक्तक्रमेण व्यभिचारवारणसम्भवे प्याप्तोक्तत्व,

वाक्यार्थस्यापूर्वत्वेन लिंगाभावेन तद्ग्रहासम्भवात्। नन्वनाप्तोक्तत्वशङ्काव्युदासोऽङ्गं, स च वेदेऽपौरुषेयत्वनिश्चयात्, लोके चाप्तोक्तत्वावधारणादिति चेन्न;— तस्याशक्यत्वात्।

---

निश्चयेऽप्युक्ताया अप्रामाणिकत्वादिति भावः। नन्वन्वयव्यतिरेकानुविधानमेव तद्धेतुतायां मानमित्याशंक्य तदेव नेत्याह (वाक्यार्थस्येति) आप्तोक्तत्वघटकस्य प्रकृतवाक्यार्थस्येत्यर्थः। "अपूर्वत्वेन"— नियतपूर्वप्रतीतिकत्वाभावेन। "लिंगाभावात्"— साध्याप्रसिद्ध्या लिंगस्याग्रहात्, व्याप्तिग्रहासम्भवादित्यर्थः। तथा च नियतान्वयव्यतिरेकानुविधानग्रहस्यासम्भव इत्यर्थः। ननु माभूदाप्तोक्तत्वनिश्चयः शाब्दबोधे कारणम्, तथाप्यनाप्तोक्तत्वशंकाया नशाब्दबोधप्रतिबन्धकत्वात् तन्निवर्तनार्थमाप्तोक्तत्वनिश्चयो भवतापि लौकिकस्थलेऽभ्युपगन्तव्यः, तत्र तच्छंकाया निवर्तकान्तराभावादित्याशंकते (नन्विति) (स चेति) तच्छंकाव्युदासश्चेत्यर्थः (आप्तोक्तत्वावधारणादिति) यद्यपि पौरुषेयत्वाभिमानविषये लौकिकवाक्ये तादृशाभिमानादेवानाप्तोक्तत्वशंकानिरासः सम्भवः तज्जन्यबोधे आप्तोक्तत्वग्रहानपेक्षया तस्य प्रामाण्यमनपवादमेव, तथापि लौकिकत्वेन ज्ञायमानवाक्यस्य प्रामाण्यासम्भवान्नैयायिकानामभिमतसिद्धिः, तादृशवाक्यस्यानुवादकत्वमेव च परेषामभिमतसिद्धिरिति भावः (तस्याशक्यत्वादिति) आप्तोक्तत्वनिश्चयस्य शाब्दबोधपूर्वमशक्यतया उक्तत्वादित्यर्थः। तथा चानाप्तोक्तत्वशंकासत्त्वेऽपि शाब्दबोधः स्वीकरणीयः, एवं यत्र स्वतःसिद्ध एतच्छंकाविरहस्तत्राप्तोक्तत्वनिश्चयानपेक्षया लौकिकत्वेन ज्ञातस्यापि वाक्यस्य प्रामाण्यं निष्प्रत्यूहमिति भावः। यदि चानाप्तोक्तत्वशंकाव्युदासार्थं लौकिकवाक्ये तन्निवर्तकतयाप्तोक्तत्वनिश्चयस्य नियतापेक्षा तदा वेदस्थलेऽपि

यदि चापौरुषेयत्व निश्चये सत्येव वेदा दर्थप्रत्यय स्तदा दोषवत्पुरुषाप्रणीतत्वे सत्या कांक्षादिम त्पदस्मारितत्वेन वेदे पदार्थे संसर्गसिद्धि रस्त्विति वेदोऽप्यनुवादकस्स्यात् । तदुक्तं -"व्यस्तपुन्दूषणा शङ्कैस्स्मारितत्वात्पदैरमी । अन्विता इतिनिर्णीते वेदस्यापि न तत्कुतः ॥ "

---

तच्छङ्कानिवर्तका पौरुषेयत्वानिश्चयस्य नियतापेक्षतया तत्राप्यानुमानिक पदार्थसंसर्गधीसम्भवेन वेदोऽप्यनुवादकस्स्यादित्याह ( यदि चेति ) ( दोषवदिति ) दोषवत्पुरुषाप्रणीतत्वे सत्याकांक्षादिमत्पद तत्स्मारितत्वेन हेतुनेत्यर्थः । बाधकमानाभावरूपयोग्यतायां स्वर्घन्त्रदुर्निश्चयत्वा द्धेतौ प्रवेशासम्भवेन तद्रूपहेतोरयोग्ये व्यभिचारवारणाय सत्यन्त दोषवदनुक्तत्वे सतीत्यर्थकम् । यद्यपि वेदस्थले पुरुषाप्रणीतत्वस्य पदविशेषणत्वेनैवोपपत्तिः, तथापि पुरुषे दोषवत्त्वविशेषणं लोकवेदसा-धारणैक हेत्वभिप्रायेण ( तदुक्तमिति ) आचार्यैरिति शेषः ( व्यस्तेति ) " दूषणाशङ्का " – वक्तृदोषाशङ्का, दोषवत्पुरुषाशङ्केति यावत्, सा, " व्यस्ता "– निरस्ता, यैस्तादृशैः, तादृशाशङ्काशून्यैः पदैरिति यावत् । पदानां तादृशाशङ्काशून्यत्व कथनेन तेषु तच्छङ्कानिवर्तक तादृशपुरुषानुक्तत्व ज्ञानविषयत्वं सूचितम् । तावता तदप्रणीतत्व विशेषणावच्छिन्न पदस्य हेतु घटकताळाभः । तथा च तादृशपदस्मारितत्वाद्धेतोः । " अमी "– पदार्थाः । " अन्विताः "– संसृष्टाः । " इति निर्णीते "– शाब्दबोधात्पूर्वमेतादृशानुमित्यात्मक निश्चये सम्भवति ( वेदस्येति ) " तत् "– अनुवादकत्वम् । न कुतइत्यर्थः । तथा च अनाप्तोक्तत्वशङ्काया यत्र कारणान्तराभावेनासम्भव स्तत्रापौरुषेयत्व निश्चयादिकं विनैव संसर्गधीर्वेदादिति तत्प्रामाण्यं सूपपन्यायेन लोक

नचैवं शब्दस्य प्रमाणत्व मपि, अनुमानादेव वाक्यार्थ प्रतीतेरिति ।

प्राभाकरास्तु–व्यभिचारि [शब्द] व्यावृत्त

---

स्थले प्यासोक्तत्व निश्चयापेक्षाया अनैयत्येन प्रामाण्य निष्प्रत्यूहमित्या शयः । वेदस्थले सर्वथा पौरुषेयत्वानिश्चयापेक्षाया शाब्दानुभवमन्तरे णैव प्रवृत्त्यादिनिर्वाहा त्तादृशविलक्षणानुभवोपि नसिद्धयदित्याह (नचै वमिति) "प्रमाणत्वमपि"– स्वातन्त्र्येणानुभवकरणत्वमपि । निर्वहे दिति शेषः । "अनुमाना" दित्यनन्तर सर्वत्रेति पूरणीयम् । लोके वेदेचेति तदर्थ' (वाक्यार्थप्रतीतेरिति) अवधारणाच्छाब्दबोधापूर्व मुप गमादिति शेषः । शाब्दप्रत्यन्तरकल्पनाभावादिति भाव । शाब्दबोधे वाक्यार्थज्ञानाधीन यथार्थतात्पर्यज्ञानापेक्षा व्यवस्थाप्य प्राभाकरै र्लौकिक शब्दस्यानुवादकत्व मुपपाद्यम्, शाब्दबुद्धौ यथार्थतात्पर्यस्य ज्ञातोप योगित्वेन्च शाब्दनिष्ठ प्रयोजकत्वस्यैव साधकत्वावश्यके, तत्सिद्धयनाय प्रसक्तस्य शाब्दप्रामाण्यप्रयोजकस्यावश्योपेयता तादृशरूपस्यच तत्प्रयो जकरूपान्तरखण्डनेन परिज्ञायमानयथार्थतात्पर्यस्य तत्प्रयोजकत्वसेत्स्यती त्याशयेनाह (व्यभिचारिव्यावृत्तमिति) व्यभिचारिव्यावृत्तत्व यद्धर्म प्रकारकप्रमोपधान प्रयोजकस्तद्धर्मप्रकारक प्रमास्वरूपायोग्यव्यावृत्तत्व । यद्यपि ह्रदोवह्निमानित्यादि मुख्यार्थपरवाक्यमपि ह्रदादिपदलक्ष्यार्थे पर्वतादौ वह्न्यादिप्रमास्वरूपयोग्य, तदन्यव्यावृत्तत्व तादृशवाक्यपाधादि साधारण, तथापि तद्धर्मप्रकारक यथार्थतात्पर्यशून्यत्वरूपायोग्यत्व विवक्षया न दोष । तद्भ्रमजनकव्यावृत्तत्वन्तु नार्थ., पर्वतोवह्निमानिति वाक्येनापि लक्षणाऽप्रत्यापितह्रदादौ वह्न्यादिभ्रमजनना त्तद्वाक्यनिष्ठ यथार्थतात्पर्यस्यैवासंग्रहात् । अप्रमाणरूपस्य प्रमाप्रयोजकत्वं न सम्भवति, अप्रमाणवाक्ये तदभावस्तत्वेपि प्रमोपधानविरहेण

---

. अन्वत्वीयान अन्य पतितः ।

मव्यभिचार्यनुगत प्रमाप्रयोजकमुपेयं, यदभावाद्
नाप्तोक्तवाक्या दप्रमा ।।

---

तदभावस्य प्रमानुपधानाप्रयोजकत्वादिति प्रामाण्यप्रयोजकतानिर्वाह प्रयोजकत्वेन, व्यभिचारिव्यावृत्त्यर्थं विशेषणोपादानं ( अव्यभिचार्यनुगतमिति ) तद्धर्मप्रकारक प्रमाकरण यावद्वाक्यसाधारणमित्यर्थः । अतथाभूतत्वे व्यभिचारेण प्रामाण्यप्रयोजकत्वानिर्वाहात् । एतस्यापि विशेषणस्य तन्निर्वाहकत्वेनोपादानं व्यभिचारिव्यावृत्तत्वे तदभावस्य प्रामाण्याभावप्रयोजकतया । तस्य प्रामाण्यप्रयोजकता निर्वाहकत्वं स्वयमेव प्रकाशयति ( त [य] दभावादिति ) " अना [प्तोक्त] वाक्यात् "- अप्रमाणवाक्यात् । " अप्रमा "- प्रमाया अनुत्पादः । यद्यप्यनाप्तवाक्यादिति पञ्चम्यर्थे तज्जन्यत्वस्य प्रमायामन्वयोपगमे प्रतियोग्यप्रसिद्धिः, अभावान्वये अयोग्यत्वमेव, तथाप्यभावान्वयिन आनन्तर्यस्य पञ्चम्यर्थत्वोपगमाददोषः । अनन्तरमितिपदं वा पूरणीयम् । नच यथार्थतात्पर्यस्य प्रमाहेतुत्वे गुरूणां प्रमाया गुणजन्यतास्वीकारप्रसंग इति वाच्यम्, प्रमात्वस्य यथार्थतात्पर्यजन्यतानवच्छेदकत्वेन तस्य गुणत्वाप्रसक्तेः, तद्धर्मप्रकारकशाब्दत्वस्यैव कार्यतावच्छेदकत्वात् । नच तात्पर्यविषयीभूतार्थस्य शाब्दबोधवारणाय तात्पर्यस्यैव शाब्दबोधहेतुत्वमस्तु, किं यथार्थतात्पर्यपर्यन्तहेतुतयेति वाच्यम्, वह्निमानित्यादि घटतात्पर्यवाक्यादेव वह्निशून्यविषयक वह्निप्रकारकबोध वारणाय वह्न्यादिप्रकारकबोधे यथार्थवह्न्यादिप्रतीतिगर्भतात्पर्यस्य हेतुताया आवश्यकत्वात् ।

नच तादृशशाब्दबोधस्य तन्मते अप्रसिद्ध्यासामग्र्यभावेन तदापत्त्यसम्भवाद्यथार्थतात्पर्यस्य हेतुत्वकल्पनं नसम्भवतीति वाच्यं तादृशविशिष्टबोधस्याप्रसिद्धत्वेऽपि वह्निप्रकारकताया वह्न्यादिशून्ये व्यापत्तिसम्भवात् ।

अथवाऽन्यार्थभासक योग्यताज्ञानादीनां पर्वतादिविशेष्यक वह्न्यादि प्रकारक योग्यताज्ञानत्वादिनैव हेतुताकल्पना वह्न्यादिप्रकारतानिरूपित वह्न्यादिमत्पर्वतविशेष्यता प्रयोजिकेव वह्न्यादिप्रकारकधीर्न वह्न्यादिशून्य ह्रदादौ वह्न्यादिविशेष्यतया नापत्तिसम्भवः, नच योग्यताज्ञानस्य समानविशेष्यता प्रत्यासत्त्यैव विशेष्यविशेषणभावानन्तर्भावेणैव हेतुताऽभ्युपगम्यते लाघवात्, तथा च विशेष्यतासंबन्धिधर्मिणि तद्बोध विशेष्यतापत्ति र्दुर्वारैवेति वाच्यम्, समानाकारकज्ञान शाब्दबोधयोस्समानविशेष्यकत्वानियमेन समानविशेष्यताप्रत्यासत्त्या तयोर्हेतु हेतुमद्भावा सम्भवादिति चेन्न; - समानविशेष्यता प्रत्यासत्त्यनभ्युपगमेऽपि समान धर्मितावच्छेदकताप्रत्यासत्त्या धर्मितावच्छेदकविशेषणनन्तर्भावेणैव शाब्दबुद्धौ योग्यताज्ञानहेतुत्व कल्पनात ह्रदत्वावच्छिन्न धर्मिक वह्न्याद्यन्वयबोधापत्तेः दुर्वारत्वात । अतो धर्मितावच्छेदक विशेषनियन्त्रित एव शाब्दयोग्यतयोर्हेतुहेतुमद्भावः कार्यकारणभावस्स्यात् । तथा च ह्रदत्वावच्छिन्नधर्मिकयोग्यताज्ञाना धारस्थानवह्न्याद्यन्वय बोधे तदवच्छिन्नस्य वह्न्यादिमत्त्वस्य धर्मिणोविशेष्यता न शक्यस्य वह्न्यादिशून्यस्यैव नियामकाभावः । अतो यथार्थतात्पर्यस्य शाब्दबोधे तत्तद्धर्मप्रकारतानिरूपित विशेष्यतानियामकत्व मावश्यकम् । तत्र भाति चय प्रतीतिनिष्ठयाथार्थ्यं घटकविशेष्यतासबन्धेन, यथार्थ तात्पर्यस्य हेतुतया निर्वहतीतिदिक् ।

[ इदमापाततः- अनुमितौ वह्न्यादिशून्यस्य प्रमाणहेतुमत्ताज्ञानधर्मितावच्छेदकाश्रयस्य तद्विशेष्यतयासमानप्रकारकत्वेनैव पक्षधर्मता धियो हेतुतायाः कल्पनीयतया तत्तद्धर्मप्रकारतानिरूपित [illegible] व्यतासंबन्धेनज्ञानं प्रति तद्धर्मत्व विशिष्टत्वेन हेतुत्वेन शा[illegible] स्यातिवारणसंभवात । तद्धर्मस्या सत्त्वद्दशायामपि तद्धर्मविशिष्ट बुद्ध्युत्पत्त्यापत्त्यभिचारेण तावेन हेतुत्वासंभवात् - तदपेक्षितम् । ]

अन्यथा कार्यवैचित्र्यं नस्यात् । तच्च ज्ञातमु
पयुज्यते,

---

निरुक्तरूपाभावस्य प्रमाविरहप्रयोजकत्वानुपगमे किमनिष्टमित्यत आह (अन्यथेति) "कार्यवैचित्र्य"-प्रमारूपकार्यस्य शब्दाभासस्थले ऽनुत्पादरूप (नस्यादिति) आकांक्षादिसत्वेन तत्र तदनुत्पादप्रयोजकान्तरस्य दुर्घटत्वादितिभावः । इदानीं यथार्थतात्पर्यस्यत्वेन प्रमाप्रयोजकतया निर्धारितत्वा द्विशेषरूपावच्छिन्ने तत्र ज्ञातोपयोगितासाधक ज्ञानोपयोगित्व हेतौ दुरवधारणतया संदिग्धासिद्धत्वेतिसामान्यत एव तज्ज्ञातोपयोगिता साध कानुमाने ज्ञानमेवावच्छेदकं नतु तद्विषयत्वं गौरवादिति । तत्रशाब्दबोधं प्रतिज्ञातोपयोगित्व रूपसाध्याभावेपिनांशतो बाधः, अवच्छेदकत्वस्य व्यावृत्ततया अवच्छेद्याश्रयेविशेषणविधया विलक्षणावच्छेदकतया एवपक्षतावच्छेदक घटकत्वात् । करणतावच्छेदकस्य ज्ञानस्यवारणाय शब्दवृत्तीति । विषयतया वृत्यनियामकतया तेन सम्बन्धेन ज्ञानस्यसम्बद्धत्वेपि तद्व्युदासः । नच पक्षतावच्छेदकसामानाधिकरण्येनैव साध्यमनुमीयताम्, तत्रांशतो बाधस्यादोषतया किं शब्दज्ञानेवारणेनेति वाच्यम्, आकांक्षादावंशतस्सिद्धसाधनस्यादोषत्वाय पक्षतावच्छेदकावच्छेदेनैव साध्यस्यसाधनीयत्वात् । शब्दवृत्तिशाब्दबोधानुपयोगि नभोवृत्तित्वादिधर्मे बाधवारणायविशेष्यदलम् । किंचित्साध्यकशब्दरूप लिंगवृत्तिव्याप्त्यादावनुमितिकरणतावच्छेदके शाब्दप्रमोपयोगि ज्ञानविषयत्वाभावेन साध्यशून्ये बाधवारणाय शाब्दत्व प्रमाविशेषणम् । गुरुमते भावस्याधिकरणस्वरूपतया शाब्दवृत्तौ बाधाभावत्वान्वयासम्भवादभावत्वादौ शाब्दबोधकारणतावच्छेदके वारणायकरणतापर्यन्तनिवेशः । साध्यमाह (ज्ञात मुपयुज्यत इति) शाब्दज्ञानोपयोगि ज्ञानविषयत्वमित्यर्थः । शाब्दज्ञानकारणतावच्छेदक विषयतावदिति यावत् । अतःशाब्दबोधजनकाकांक्षादिविषय

कलमुद्दालम्बनस्य परमेश्वरज्ञानस्यविषयतया न सिद्धसाधनसम्भवः । यथार्थतात्पर्ये तादृशसाध्यसिद्धौ तद्विषयज्ञानत्वेन शाब्दधीकारणत्व सिद्धिपर्यवसाना। यथार्थतात्पर्यज्ञानस्य शाब्दबोधनियतापेक्षया शब्दस्यानुवादकतासिद्धिरिति भावः ।

अथ गुरुमते तादृशतात्पर्यज्ञानं न शाब्दबोधेकारणम्, तद्विशिष्टे शब्दे विशेषणविधया विषयतासम्बन्धेन ज्ञानस्यावच्छेदकतयापि तदवच्छिन्न शब्दनिष्ठविषयताक ज्ञानस्यशाब्दबोधे पक्षयोहेत्वसिद्धेः स्वतन्त्रकारणताया निर्युक्तिकत्वात्; नच ज्ञायमानस्तात्पर्यविशिष्टशब्दस्तद्विशिष्टशब्दज्ञानं वा हेतुरित्यत्र विनिगमनाविरहा दुभयहेतुतासिद्धिरिति वाच्यं, शब्देनानुभवतीति व्यवहारानुरोधेन शब्दस्य कारणताया आवश्यकत्वात् । अन्यथा ज्ञायमान शब्दकरणतापक्षे ज्ञानेतापुरुषीयत्वस्य निवेश्यतया गौरवेण शब्दज्ञानस्यैव सामानाधिकरण्य प्रत्यासत्त्या हेतुतायाहिसिद्धिप्रसंगात् । अनुमितिस्थलेतु व्याप्यादिविशिष्टलिंगज्ञानस्य व्यापारतानिर्वाहाय कारणताया आवश्यकत्वात्, शाब्दस्थले च पदार्थोपस्थितेरेव व्यापारतेति विशेषादितिचेत् ? अस्तु तर्हि स्वावच्छिन्नविषयता संबंधावच्छिन्न ज्ञानवृत्ति शाब्दज्ञानकरणतावच्छेदकावमेव ज्ञातोपयोगित्वम् । "व्याप्तिवदि" ति दृष्टान्तस्य वक्ष्यमाणसामान्यव्याप्त्यभिप्रायेणसंगतेः ।

अथैवमपि तात्पर्यज्ञानापेक्षानसिद्ध्यति, हेतौ यथार्थतात्पर्यत्वे ज्ञातोपयोगिता व्याप्तिविरहेण तेनरूपेण ज्ञातोपयोगितापर्यन्तस्य साध्यत्वासंभवात्, इदानीं तात्पर्यस्य यथार्थत्वेन हेतोरक्षतया * पक्षतावच्छेदकावच्छेदेन ज्ञातोपयोगिता साधनस्य बाधाद्प्यसंभवात्, तेनरूपेण ज्ञानस्य हेतुतया गुरुणाप्यनुपगमादिति चेन्न;- स्वनिष्ठ शाब्दज्ञानोपयोगितावच्छेदकरूपेण शाब्दज्ञाने ज्ञातोपयोगितासाधनेनैव समीहितनिर्वाहात, परिशेषेण यथार्थ तात्पर्यत्वावच्छिन्नस्यैव शाब्दज्ञानोपयो

---

* अत्र कियानपि ग्रंथः पतितः ।

ज्ञायमानकरणे ज्ञानोपयोगि व्यभिचारिवैलक्ष
ण्यत्वात् ;

---

गितायाः व्यवस्थापनीयतया उक्तसाध्यसिद्ध्यैव यथार्थ तात्पर्यज्ञानहेतु तासिद्धिं पर्यवसानात्, व्याप्तेरपि स्वनिष्ठानुमितिरूप ज्ञानोपयोगिता वच्छेदकव्याप्तित्वेन तादृशज्ञाने ज्ञानोपयोगितया दृष्टान्तसङ्गतेः । अथवा शाब्दप्रमाकरणतावच्छेदकत्वेन ज्ञायमानकरणे ज्ञानोपयोगिव्यभिचारि व्यावृत्तस्य न पक्षता, अपितु शाब्दप्रमाकरणतावच्छेदकत्वोपलक्षित रूप विशिष्टस्यैव, तादृशरूपस्य यथार्थतात्पर्यवत्त्वरूपतया तद्विशिष्टपक्षे ज्ञानो पयोगित्वसिद्ध्यैव तात्पर्यहितसिद्धिः । कारणतावच्छेदकतावच्छेदकत्व स्योपलक्षणतया तद्विशिष्टयथार्थ तात्पर्यत्वावच्छिन्नविषयकज्ञानस्य हेतु त्वेपि नबाधः । हेतुमाह (ज्ञायमानइत्यादि ) "ज्ञानोपयोग."-ज्ञानरूपकार्य घटित सहकारित्व, तत्र ज्ञायमानकरणनिष्ठप्रतियोगित्वस्य सप्तम्यर्थस्यान्वयः। उपयोगित्वस्य वृत्त्येकदेशत्वेपि गम्य क्रियात्वेन निरूपकस्याप्याधार प्रभेदतया कारकत्वेन तदन्वितविभक्त्यर्थ निरूपितत्वस्योपयोगेन्वयः, तत्सहकारित्वं च ज्ञानरूपकार्यघटित, तज्जन्यज्ञानकारणतावच्छेदक त्वं । ज्ञानञ्च प्रकृते शाब्दं । ज्ञायमानकारणजन्यत्वं च ज्ञायमानत्वावच्छि न्न कारणताकत्वं । तथाच ज्ञायमानत्वावच्छिन्न कारणताकशाब्दज्ञान कारणतावच्छेदक ' ज्ञानोपयोगि ' त्वार्थः । ज्ञायमानत्वावच्छिन्न शाब्द ज्ञानकरणतावच्छेदकत्वं पर्यवसितं । ज्ञायमानत्वावच्छिन्नायाः ज्ञान करणताया एव ज्ञायमानत्वावच्छिन्न करणताक ज्ञानकरणतात्वेनाभिधान ज्ञायमानत्वव्यावृत्ताया ज्ञायमानत्वरूपावच्छेदक विशेष्यतावच्छेदकतया कारणतावच्छेदकतायाश्चाभाव । तेन ज्ञायमानत्वरूपकरणतावच्छेदके ज्ञानोपयोगित्वाभिधानेपि नक्षतिः । व्यभिचारिवैलक्षण्यत्वं व्यभिचारित्वा न्तरत्वम् । तच्च विशेषादिप्रवृत्तिजनक ज्ञानकरणतानवच्छेदकत्वम् । एवं

च ज्ञायमानत्व रूपावच्छेदक विशेष्यतावच्छेदकविषया शाब्दज्ञानकरण
तावच्छेदकत्वेसति प्रमाकरणतानवच्छेदकत्व प्रकृतहेतुः । यद्यज्ज्ञान
करणतायां ज्ञायमानत्व विशेष्यतावच्छेदकतया वच्छेदकत्वेसति भ्र
मकरणतानवच्छेदकं तत्तज्ज्ञानेज्ञायमानमुपयुज्यत इति सामान्यमुखी
व्याप्तिः । ज्ञायमानत्व विशेष्यतावच्छेदकतयेत्यनुक्तौ प्रत्यक्षकरणता
वच्छेदकेन्द्रियत्वादौ प्रत्यक्षं प्रतिज्ञातोपयोगित्व शून्ये नुमित्यादिकरणताव
च्छेदक ज्ञायमानत्वे च ज्ञातोपयोगित्वशून्ये व्यभिचारस्स्यादितितदु
पादानम् । मनोयोग बाधाभावादेरनुमित्यादि ज्ञानोपयोगित्वेऽपि तत्क
रणतानवच्छेदकत्वात् परामर्शत्वादेरनुमिति करणतावच्छेदकस्यापि तथा
त्वात् न व्यभिचारः । व्याप्तिभ्रमजन्यानुमित्यादिस्थलीया गृहीतासंस
र्गक धर्मधर्मिविषयक ज्ञानद्वये ज्ञायमानत्वविशेषित ज्ञायमानव्याप्यता
यसंसर्गग्रह शून्यत्वावच्छिन्नस्य व्याप्यत्वादि भ्रमविषयलिङ्गस्य करणतया
तादृशज्ञानद्वय करणतावच्छेदका संसर्गग्रहे व्यभिचारवारणाय विशेष्य
दलम् । नचधूमलिङ्गक पर्वतादि पक्षकानुमिति स्थलाभिषिक्तागृहीता
संसर्गकधूमविषयक ज्ञानद्वयस्य विसंवादिप्रवृत्त्यजनकतया तत्करणताव
च्छेदक व्याप्यत्वास संसर्गग्रहे व्यभिचारइति वाच्य, धूलीपटलादौ
धूमत्वादि व्याप्यसंसर्गाग्रहस्य वह्निव्याप्य धूलीपटलवान् ह्रदइत्यादि
भ्रमेपि प्रयोजकत्वाभाव । यत्तु तत्तु विसंवादिप्रवृत्तिजनकत्वेन तज्ज्ञान
द्वय करणत्वम दपादेयः, किन्तु ज्ञानद्वयत्वेन स्मृतित्वेनवेति संवादिप्रवृ
त्तिजनक ज्ञानद्वयजनकासंसर्गाग्रहस्यापि तादृशज्ञानकरणतावच्छेदक
त्वात्तत्रव्यभिचारः । एतेन किंचिल्लिङ्गनिष्ठाया व्याप्तेः पक्षधर्मताया
वा असंसर्गाग्रहस्य भ्रमानुत्पत्तियोगित्व स्संवादिप्रवृत्तिजनकज्ञानोपयोगित्व
स्सत्वेपि न तत्र व्यभिचारः ।

मिश्रानुयायिनस्तु ( ज्ञायमानकरण इति ) यज्ज्ञानं प्रतिज्ञातोपयो
गित्वं साध्यं ज्ञानावच्छिन्न तज्ज्ञानकरणतावत्तेत्यर्थः । समभ्यर्थस्या
भेदान्वयस्य ज्ञानोपयोगिन्यन्वयः । क्रियायोगाभावेन ज्ञायमानकरणस्या

धारस्याप्यकारकतया कारकाधिकारीयेण "आधारोऽधिकरण" मिति सूत्रेणाधिकरणसंज्ञाविरहेण "सप्तम्यधिकरणे च" तिसूत्रेण सप्तमी विधानानिर्वाहे प्युरासिद्धोमित्यादिव त्कथंचि दाधारसप्तम्युपपत्तिः । तथाच ज्ञानावच्छिन्न तज्ज्ञानकरणतावद्वृत्ति तज्ज्ञानोपयोगित्वं विशेषणदलार्थः । उपयोगित्वं कारणतावच्छेदकप्रयोजकसाधारणं प्रयोजकत्वं । लिंगपरामर्शादे रनुमित्याद्युपयोगिनोऽपि लिंगादिरूपकरणवृत्तिताविरहा न्नतत्र व्यभिचारः । सामान्यपरत्वेन ज्ञायमानकरणस्य विशेषणीयतयात्म लिंगकानुमिति कारणताद्दशपरामर्शस्य ताद्दशकरणात्मानिष्ठत्वेऽपि न व्यभिचारः । इन्द्रियनिष्ठप्रत्यक्षज्ञानोपयोगिनिर्दोषाभावेन्द्रियमनोयोगादौ व्यभिचारवारणाय ज्ञायमान करणोपादानम् । इंद्रियस्यापि स्वलिंगकानुमितौ ज्ञायमानतया करणत्वात्तज्ज्ञाननिरूपित ज्ञानावच्छिन्न करणतानिवेशः । अनुमित्यनुपयोगिनि ज्ञायमान तत्ताकरणलिंगनिष्ठरूपादौ व्यभिचारवारणाय तज्ज्ञानोपयोगित्वनिवेशः । लिंगतया धूमतदीयरूपाद्यु भयलिंगकानुमित्युपयोगिनि ताद्दशानुमिति करणनिष्ठे तदीयरूपादौ तदनुमितिज्ञानोपयोगितया साध्यसत्वेन न व्यभिचारावकाशः । गुरुमते सिद्ध्यभावस्यानुमितावहेतुतया न तत्रव्यभिचारप्रसक्तिः । बाधाद्यभावस्य विशेष्यनिष्ठस्य भ्रमसामग्रीतया व्यभिचारिव्यावृत्तत्व विरहेण न तत्रव्यभिचारः । तद्धलाभावेनैवात्ममनोयोगादौ मनोलिंगकानुमितौ ज्ञायमानकरणे मनसिवर्तमाने ताद्दशानुमित्युपयोगिनि न व्यभिचारः । व्यभिचारिव्यावृत्तत्वं च भ्रमसामग्र्य प्रविष्टत्वम् । तत्र न तदनुपधायकत्वं, येन यदात्ममनोयोगेन तल्लिंगकानुमितिरेव जनिता नतु स्मृति स्तत्र व्यभिचारोदुर्वारस्स्यात्, किंतुतन्निष्ठकार्यतानिरूपित कारणतावच्छेदकरूप शून्यत्वम् । आत्ममनोयोगत्वादेस्ताद्दश रूपतया तद्वति न व्यभिचारः । नच व्याप्तेस्तात्पर्यत्वस्य च क्वचित्ताद्दश्यरूपतया सद्दशरूपतया वोद्बोधकत्वेन स्मृतिहेतुतया दृष्टान्तासिद्धिस्वरूपासिद्धी इतिवाच्यं, तज्ज्ञानस्यैवोद्बोधकविधया हेतुत्वोपगमात्, नतु ज्ञायमानस्य सत्य । अथवास्मृत्यनुभय साधारणधर्मावच्छिन्न कार्यतानिरू

प्रमाहेतुत्वाद्वा, व्याप्तिवच्छब्दशक्तिवच्चेति । अन्यथा शब्दाभासोच्छेदप्रसङ्गः । नचाप्तोक्तत्वं तथा, संवादात्प्रमाणे शुकोदीरिते भ्रांतप्रतारकसंवादिवाक्ये वेदेच तदभावात्; आप्तोक्तत्वानुमाने व्यभिचारिव्यावृत्तलिङ्गाभावाच्च । भावेवा तद्वतएव शब्दस्य प्रत्यायकत्वात् ·

एतेन - अप्रमाहेतुत्वं नभ्रमप्रमाद विप्रलिप्सा करणापाटवानां, परस्परंव्यभिचारात; मिळि

---

त कारणताशून्यत्वमेव निवेश्यम् । उद्बोधकजन्यतावच्छेदक स्मृतित्वधर्मस्य नानुभवसाधारण इतिनोक्तासिद्ध्यवकाशः । अतएव लिङ्गपरामर्शादे स्स्मृतिजनकत्वेपि स्मृत्यनुभवसाधारणधर्मस्य तज्जन्यतानवच्छेदकतयैतद्दलेनावारणा त्करणे आत्मान्यत्व निवेश्यैव तत्रव्यभिचारोनिराकृतः । उपेक्षात्मक परामर्शस्यैव स्मृत्यजनकतया तत्रव्यभिचारस्य स्मृत्यजनकत्वनिवेशेन दुर्वारतया पूर्वकल्पे त्वात्मान्यत्वनिवेशनानुसरणमितिवदंति ।

हेत्वंतरमाह (प्रमाहेतुत्वाद्वेति) ज्ञानान्यत्वेसति ज्ञायमानत्वावच्छिन्नकरण प्रमित्यसाधारणत्वादित्यर्थः । अत्रापि यत्तत्ताविनोपादाय सामान्यव्याप्तिरादरणीया । सल्लिङ्गपरामर्शादौ व्यभिचारवारणायसत्यन्तम् । अवश्रुतावपि लोकवत्तात्पर्यस्याप्यापकादुच्छिष्टाघटितत्वे केनचित्पुंसा स्वतंत्रेण कपिजल चतुष्टयालंभनादिकर्तव्यतायां स्तत्बोधसंभवात्तादृशोप्यर्थो वेदार्थतया अबाधितस्स्यात्, वेदार्थस्या बाधितत्वनि

तस्याव्यापकत्वात्; किन्त्वाप्तोक्तत्वाभावस्या प्रमा हेतुत्वं, तदभावश्चाप्तोक्तत्वं प्रमाहेतुः, इत्यपास्तं;— आप्तोक्तत्वस्य प्रथमंलिङ्गाभावेन ज्ञातु मशक्य त्वात् ।

अतएव व्यभिचारशङ्काविरहो हेतुः, सा च लोकेभ्रमादि मूलेत्याप्तोक्तत्वानुमाना दुच्छि द्यते, वेदे चा पोरुषेयत्व निश्चयेन, इति निरस्तं;— अभिमतवाक्यार्थस्या पूर्वत्वेन साध्याप्रसिद्धेः, वेदे सदोषपुरुषाप्रणीतपदस्मारितत्वेन संसर्गसिद्धे रनुवादकतापत्तेश्च ।

नापिदोषाभावः, भ्रान्तप्रतारक वाक्य जन्य ज्ञाने प्रत्यक्षेणा गृहीतसंवादे तदभावात् । दोषाभावस्य हेतुत्वात्तत्रवाक्यम्मूकमेव, व्यवहा रस्तु प्रत्यक्षादितिचेन्न;— अनुभवापलापापातात्, तद्धेतुत्वे विवादाद्वेदेप्यनुवादकतापत्तेश्च ।

किंच दोषाभावस्य प्रमाहेतुत्वे ऽप्रमायांदो षः कारणम् । तस्य च प्रत्येकं हेतुत्वेव्यभिचारः । मिळितस्यतत्त्वे-एकस्माद प्रमानस्यात् । भ्रमादीनां प्रत्येकं दोषत्वेननुगमः । मिळितस्य तु तत्त्वे एक स्मादप्रमानुदयप्रसंगः ।

तस्मा ल्लाघवा यथार्थतात्पर्यकत्वं शाब्द प्रमाप्रयोजकं । तच्च यथार्थवाक्यार्थप्रतीतिप्रयोजनकत्वं लोकवेदसाधारणं । तदभावादप्रमा,सएवदोषः; नहि जात्यैव कश्चिद्दोपः । तद्विघातकत्वाच्च भ्रमादीनां दोषत्वं । अतएव प्रतारकवाक्यं शुकादिवाक्यं च प्रमाणं, संवादात् । अतएवान्य घटाभिप्रायेण गेहे घटोस्तीत्युक्ते यत्र घटांतरं दृष्ट्वा तमानयति तत्रान्यपरत्वा च्छब्दो न प्रमाण, व्यवहारस्तु प्रत्यक्षादेव । यष्टीः प्रवेशयेति च मुख्यार्थबोधेनप्रमाणं, यत्परश्शब्दस्सशब्दार्थइतिन्यायात् ।

तच्च तात्पर्यं ज्ञातमुपयुज्यते, ज्ञायमानकरणे ज्ञानोपयोगिव्यभिचारिवैलक्षण्यात् , व्याप्तिवच्छक्तिवच्च । अन्यथा - अन्यपरादन्यान्वयबोधोनस्यादिति शब्दाभासोच्छेदप्रसंगः । तद्भ्रमाच्च शाब्दभ्रमः । अतएव यष्टीः प्रवेशयेत्यत्र लक्षणा नानार्थे विनिगमनाच, तयो स्तात्पर्यग्रहमूलकत्वात् । यदिच यत्र वास्तव तात्पर्यं तं शब्दोबोधयति तदा लक्षणाया मुख्यार्थान्वयानुपपत्त्युपयोगो नस्यात् । अतएव पचतीत्युक्तेऽर्थोक्तेन स्वयं स्मृतेनवा कलायपदेनोपस्थिते कलायं

पचतीत्यन्वयबोधोनभवति, तात्पर्यानिश्चयात् । नच तात्पर्यग्राहकस्य प्रकरणादेः प्राथम्यादावश्यकत्वाच्च शब्दसहकारिता नतु तात्पर्यग्रहस्येतिवाच्यम् , तेषां मननुगतत्वेन परस्पर व्यभिचारादहेतुत्वात् । तात्पर्यग्राहकतात्व ननुगतानामपि, व्याप्यत्वा द्धमादीनामिव ।

तच्च तात्पर्यं वेदेन्यायगम्यं,

---

यथादियाशङ्कायां यस्मिन्नर्थे वेदस्यानादितात्पर्यं स एववेदार्थ इत्युच्यते । तादृशपदार्थे अबाधिताथनियमः, अनादितात्पर्यं च वेदस्यन्यायावधार्यतात्पर्यकेर्थं इतिसमाधिः, अतोवक्तृतात्पर्यस्य न्यायावधार्यतामाह ( तच्चेति ) " न्यायगम्य "– न्यायावधार्यं । न्यायश्चात्रमीमांसायां जैमिनिप्रकाशित तात्पर्यनिश्चायकयुक्तिः । युक्तिश्चानुमानम् , अनुमानानुग्राहकतर्कोवा । कपिञ्जलानालभेतेत्यत्र बहुवचनार्थं बहुत्वाद्यपक्षयात्रित्वस्य प्रथमोपस्थितत्वमेव तत्रबहुवचनतात्पर्यानुमापकमिति । यद्यपि सङ्ख्यापरिगणने चतुष्ट्वादिरूपबहुत्वाद्यपेक्षया त्रित्वस्य प्रथमोपस्थितत्वेपि सर्वत्र चतुष्ट्वाद्युपस्थितौ त्रित्वोपस्थित्यनपेक्षया त्रित्वस्य न प्रथमोपस्थितत्वं, कादाचित्कंच तत्रचतुष्ट्वादावपेक्षत, तथापि त्रित्वादिसहित तदधिकरणैकत्वापेक्षाबुद्धिरेव चतुष्ट्वादिव्यञ्जिकेतिमते चतुष्ट्वाद्यपेक्षयात्रित्वस्य प्राथमिक प्रत्यक्षविषयत्वरूप प्रथमोपस्थितत्वं तात्पर्यग्राहकमिति तेषामाशय । तच्चोक्तं तात्पर्यानुमानच-त्रित्वे वैदिकबहुवचन पदतात्पर्यविषय, तदर्थत्वसति तदीयार्थान्तरापेक्षया प्रथमोपस्थितत्वा( यो यदर्थत्वेसति यदीयार्थान्तरापे

यस्यन्यायात्तात्पर्यमवधार्यते सएववेदार्थः। लोकेच नकेवलं न्यायानुसारि तात्पर्यमिति न न्यायगम्यं, किंतु पुमभिप्रायनियंत्रितं, न्यायाविषयेपि पुरुषे च्छाविषय प्रतीतिजनकत्वात्पुंवचसाम् ।

---

तया प्रथमोपस्थित स्वतात्पर्यविषयइति सामान्यतोव्याप्तिः। यद्वा इह बहुवचनपदं त्रित्वपरं, न्यायांतरापेक्षया प्रथमोपस्थित तात्पर्यक बहुवचनत्वादिति । अत्रपूर्ववत्सामान्यतोव्याप्तिरूह्या । एवंचरमोपस्थिति कत्वा चतुष्ट्वादे रमादितात्पर्याभाव मवधार्य परिशेषेणापि तादृश त्रित्वे तादृशतात्पर्यावधारणसंभवः । चतुष्ट्वाकभनादौ तात्पर्य अपूर्व चतुष्टयोपगमेगौरवम्, अन्यथाक्वापवमित्यवास्त्रिवे तात्पर्याव धारणमित्यन्ये (यस्येति) तथाचोयादिः । लोकेवेदतोविशेषं दर्शयति (लोकेचेति) लौकिकवाक्येचेत्यर्थः (न केवल न्यायानुसारीति) न्या याविषयेप्यनादितात्पर्या तात्पर्य न्यायविषयएवेति न नियमइत्यर्थः (अन्यायगम्यमिति) न्यायाविषयेच तात्पर्यविषयो नचतुष्ट्वादिकमित्य वधारणस्याविषयइत्यर्थः । नियमाभावेन तदवधारणासंभव इतिभावः। नियमाभावं दर्शयति (किंत्विति) यथेच्छपुरुषा धीमतिविपादृविषयो नचित्यर्थः (न्यायाविषयेपीति) न्यायाविषमात्रेपीत्यर्थः । चतुष्ट्वादा विविशेषः (पुरुषेति) पुरुषस्येच्छाविषयो यामतीति स्वजनकत्वा नावादित्यर्थः (पुंवचसामिति) घटानानयेत्यादि वाक्यप्रयोगपरम्पराया इत्यर्थः । तथा च तत्रापि तेषा मनादितात्पर्यमिति भावः।

केचित्तु वेदजन्यशाब्दबोधे न्यायाधीनतात्पर्यावधारणमेव हेतुः,अतो यन्न्यायात्तात्पर्यमवधार्यते स एव वेदजन्यबोधविषयः, लौकिकस्थलेच न्यायाविषयोप्यर्थः शाब्दबोधे भासते, तत्रशाब्दबोधे तात्पर्यज्ञानहेतु

वक्ता च परकीय वाक्यार्थ ज्ञानोत्पादनेच्छया वाक्य मुच्चारयति ।

---

तायाः व्याप्त्याधीनत्वाप्रवेशादिति प्रघट्टकार्थ इत्याहुः, तदसत्, वेदस्थले तात्पर्यज्ञानादिसत्त्वेऽपि शाब्दबोधापलापे तत्र तात्पर्यज्ञानहेतुताया एव निर्युक्तिकत्वापत्तेः । वेदस्य नियतार्थबोधकत्वे तत्तदर्थविषयकशाब्दत्वस्य तद्वाक्यज्ञानजन्यतावच्छेदकत्वेनैवान्यार्थबोधकताप्रसञ्जनानवकाशात् न च तात्पर्यज्ञानस्य शाब्दसामान्यकारणतया वेदजन्यबोधस्यापि तात्पर्यधीजन्यत्व मनपवादमिति वाच्य, तथापि व्याप्त्याधीनतात्पर्यज्ञानस्य विशेषरूपेण हेतुताया स्तत्राप्रामाणिकत्वात् । अर्थभेदेन वाक्यभेदेन च तात्पर्यज्ञानहेतुता भेदात्, लोकवद् साधारणतात्पर्यज्ञानस्य शाब्दसामान्येऽनुगतकारणत्वासम्भवाच्च । अथ यथार्थतात्पर्यज्ञानस्य शाब्दबोधहेतुत्वेऽपि पयसा सिञ्चतीति लौकिकवाक्यार्थस्य एव करणकत्वविशिष्टसेकत्वादिरूप प्रकृतवाक्यप्रतिपाद्यतावच्छेदकविशेषधर्म मविषयीकृत्य एव, पदार्थकरणत्वविशिष्ट सेचनादित्वादिनैवावगाह्य तद्विषयकत्वे न एव करणकत्वप्रकारकत्वे सति सेकविशेष्यकत्वेन वा प्रतीतिविषयक तात्पर्यज्ञानाच्छाब्दबोधोपगमेन लौकिकस्यापि वाक्यस्य नानुवादकता निर्वहति समानाकारकवाक्यार्थज्ञानस्य शाब्दबोधात्पूर्वमजातत्वात्, आवश्यकञ्च तादृशस्यैव ज्ञानस्य शाब्दानुभवहेतुत्व विशिष्य प्रकृतवाक्यार्थस्य नियमतश्शाब्दबोधात्पूर्वं प्रमाणान्तरेण दुरवधारणत्वात्, अन्यथा वेदस्याप्यनुवादकतापत्तेरित्याशङ्कानिराकर्तुं लोकस्थले विशिष्य वाक्यार्थनिश्चयस्यापेक्षां तत्सम्भवञ्च दर्शयति ' वक्ता " इत्यादिना ( परकीयवाक्यार्थ ज्ञानोत्पादनेच्छयेति ) प्रमाणान्तरेण स्वयं वाक्यार्थं ज्ञात्वा तद्वाक्यार्थज्ञानत्वेन स्वीयवाक्यार्थ विषयवाक्यार्थ ज्ञानमप्यवगाहमानया समानप्रकारकत्वमात्रा तुल्यतया परोऽप्येतादृश

व्याप्यं निर्वहतीति वक्तु र्यथार्थं वाक्यार्थ ज्ञान वत्तामविज्ञाय यथार्थं प्रतीति परत्वं ज्ञातुं नशक्य तइति प्रथममाप्तवाक्या द्वक्तृज्ञानानुमानपूर्वक मर्थ तथात्व मनुसंधाय यथार्थ तात्पर्यनिश्चयः ।

---

मानुमानासम्भवात् । वक्तृज्ञानानुमानमेव किमर्थमित्याकांक्षायामाह (वक्तुर्यथार्थं वाक्यार्थज्ञानवत्तामिति) (ज्ञातुं नशक्यत इति) वक्तुर्यथार्थ ज्ञानस्याज्ञाने सेकादौ पयःकरणकत्वादिना संसर्गानुमाने पयः करण कत्वादिप्रकारक यथार्थज्ञानविषयकत्वरूप हेतोरज्ञानेनार्थ तथात्वानुमा नस्य वक्तु र्यथार्थज्ञानसमानविषयकत्वेनैव तत्तात्पर्यघटक स्वकीय ज्ञानस्य श्रोत्रा याथार्थ्यानुमाना द्वक्तृयथार्थज्ञानमज्ञात्वा यथार्थप्रतीतुद्दे शंपकाद्य ग्रहस्यासम्भवादिति भावः ( आप्तवाक्यादिति ) प्रमाणजन्य वाक्यप्रयोक्तृत्वरूप वक्ष्यमाणहेतोरित्यर्थः ( अर्थतथात्वमनुमायेति ) विशेष्यपदार्थे विशेषणपदार्थसंसर्ग वक्ष्यमाणरीत्यानुमायेत्यर्थः ।

अथार्थं तथात्वानुमानं किमर्थं, तद्विनापि यथार्थज्ञानानुमानमात्रेण यथार्थज्ञानेच्छयोच्चारितत्वरूप यथार्थतात्पर्यस्य सुग्रहत्वात्; नच यथा र्थज्ञानानुमानेपि पयः करणकत्वेकहति (?) विशेषणतावच्छेदक प्रकारक निश्चय विना तद्विशिष्टवैशिष्ट्य बोधरूपपयःकरणकत्वसेकत्वावच्छिन्न (?) च्चारितमिति तात्पर्यज्ञानं नसम्भवती त्यर्थतथात्वानुमान मपेक्षितमिति वाच्यम्, यथार्थत्वेन वक्तृज्ञानानुमानस्य तात्स्वपयः करणकत्वादि रूपविशेषणवत्सेकादिविषयकत्वमात्रा तस्यैवोक्तविशेषणतावच्छेदक प्रकारकनिश्चय रूपत्वादित्येव; - यथार्थ ज्ञानानुमाने च विशेषणवद्वि शेष्यविषयकत्वरूप याथार्थ्य ज्ञानतावच्छेदकघटकं तत्तत्स्वपयः करणकत्व सेकेत्व प्रकारकत्वेकमिति तात्पर्यग्रहसंभवा द्यर्थतथात्व

साधकमनुमानान्तरमपेक्षितमेव, यत्र च तादृश यथार्थत्व प्रतिबन्धक
कारणं नानुमानावतारः, अपितु भ्रमान्यवृत्तितद्विशेषणीय प्रकारतानि
रूपित तद्विशेष्यताकज्ञानत्वरूप याथार्थ्य प्रकारेण स्वविषयवत्तद्विशे
ष्यताकत्व तद्विशेषणविषयक ज्ञानस्वरूप विशिष्टज्ञानत्व प्रकारेणैव वा
तत्रवक्तृज्ञानानुमितेर्विशेषण विशिष्टविशेष्यावगाहितया तादृशविशेष्या
वगाहिनोऽनुमित्यन्तर ज्ञानस्यापेक्षेति तात्पर्यकाभि प्रायेणार्थं तथात्वमनु
मापैरभिधानात् । अत एवाग्रे 'वक्तृज्ञानावच्छेदकतया तदुपजीवि
संसर्गानुमानाद्वा वाक्यार्थस्य प्रतीतेरनुवादकः शब्द' इत्युपसंहारस्या
प्यविरोधः ।

अथैवमपीदं वाक्यं पयःकरणकत्वयावत्त्वधारत्वं विषयक प्रती
त्युद्देश्यकमिति सामान्यतः पयः करणकत्व प्रकारकसेकप्रतीत्युद्देश्य
कमिति प्रकारताविशेषणतयैव विशेषणविषयकं वा तात्पर्यज्ञानं शा
ब्दानुभवे हेतु रुच्यते, तथा च नानुवादकः शब्दः, अन्यथा वेदस्याप्यनु
वादकतापत्तेरिति पूर्वपक्षोऽनुबद्धस्यव ।

अत्र मिश्राः —तात्पर्यघटकप्रतीतेर्बाधितार्थकत्वसत्त्वे शाब्दबोधानुद
या दबाधितार्थकत्वेन प्रतीतिविषयक तदुद्देश्यकत्वज्ञानमेव कारणं वा
च्यम् । अबाधितार्थकत्वं च विशेषणवद्विशेष्यविषयकत्वं, वेदपक्षे
तदर्थस्य प्रमाणान्तराप्राप्ततया दुर्ग्रहत्वात् । ,किन्तु विशेष्यनिष्ठाभाव
प्रतियोगिविशेषणकत्वम् । पयः करणत्वादिविशेषणे सेकादिनिष्ठाभाव
प्रतियोगित्वं च तत्र तादृशाभावप्रतियोगित्वस्याप्रसक्तेः दुर्ग्रहमिति
तदुद्बोधिविशिष्ट सेकः पयः करणकइत्यादिज्ञानमपेक्षितम् । तादृशज्ञाने स
तिपयःकरणकत्वादौ सेकादिवृत्तित्वेन हेतुनोक्ततादृशाबाधितत्वग्रहसम्भवात् ।
न च तादृशाबाधितत्वग्रहे तद्ग्राहकहेतौ च सिषाधयिषात्वेनैव सेकादिज्ञान
मुपगन्तव्यम् , ननु सेकत्वादिनैव प्रमाणप्रकारक वाक्यार्थज्ञानापेक्षेति
वाच्यम्, अन्यथा सिषाधयिषा दाहादौ पयःकरणकत्वादेर्बाधात्तादृश

धात्वर्थत्वावच्छेदनच्च वह्निकरणकत्वादेरपि बाधस्याभावा द्विशिष्यविशेष्यतावच्छेदक सेकत्वाद्यवच्छेदेन बाधितत्वस्याभावएव प्रयोजकोवाच्य इति तद्ग्राहकहेतावपि विशिष्यसेकत्वादिना सेकादेर्निवेशनीयत्वात् । अन्यथाव्यभिचारात् । वेदस्थले च वाक्यार्थस्य प्रमाणान्तराप्राप्ततया उक्तप्रतीत्या प्रतीतौ नाबाधितार्थकत्वग्रहसम्भवः, अपितु वेदजन्यज्ञानत्वादिनैवेति नानुवादकता । येन पुंसा वेदजन्यज्ञानत्वादौ नाबाधितार्थकत्व व्याप्तिर्गृहीता तस्य वेदा प्रभवत्येव शाब्दधीरिति वदन्ति । तन्न मनोरमं, विनापिवाक्यार्थस्य विशिष्यग्रहं कथञ्चिद्गृहीतेपि प्रमाणजन्यवाक्यजन्यत्वेनानुमित वक्तृयथार्थज्ञानसमानविषयकत्वादिनाच हेतुना तात्पर्यघटक लौकिकवाक्यार्थविषयक प्रतीते स्त्वबाधितार्थावगाहित्व सम्भवात्, तत्र लौकिकस्यप्रमाणतया दुर्वारत्वात् ।

वस्तु तस्तु तात्पर्यघटकप्रतीतौ विशिष्याविशेषणवह्निविशेष्यत्वविषयकत्वाभावशङ्कायां शाब्दबोधानुदयात् तद्बुद्धिविरोधि विशिष्य विशेषणवह्निविशेष्यविषयकत्वेन प्रतीतिविषयक तद्बुद्ध्यकाव ज्ञानमेव शाब्दबोधहेतुरुपेयते, तावतैवच तात्पर्यग्रहे वाक्यार्थज्ञानापेक्षा विशेषणतावच्छेदकप्रकारकधीविधयात्तुरुपपादेव । नच पयःकरणकत्ववह्निविशेष्यक तत्प्रकारक सेक प्रतीतिच्छयोच्चारितमित्येव विशेषणांशे निर्धर्मितावच्छेदककतात्पर्यधीरेवशाब्दबोधहेतु, तत्रच विशेष्यतावच्छेदकसेकत्वाद्यवच्छिन्ने नोक्त विशेषणज्ञानमपेक्षितमिति नानुवादकताशब्दस्येतिवाच्यम्, प्रतीत्यंशे पृथक् पयःकरणकत्वादिमद्विशेष्यकत्व सेकादिविशेष्यकत्वयो रुभयोर्ग्रहस्य हेतुतापेक्षया पयःकरणकत्वादिविशिष्ट सेकत्वाद्यवच्छिन्न विषयकत्वेन प्रतीत्यवगाहिनो ज्ञानस्य हेतुत्वेलाघवात्, तादृशज्ञानस्यापि वक्ष्यमाणप्रणाल्या वाक्यार्थज्ञानसम्भवेननिर्वाहात् । गौरवसहिष्णुतायाः प्रयुक्तत्वात् । वेदस्थलेच तदर्थस्य प्रमाणान्तराप्राप्ततया स्वर्गसाधनत्वादि धर्म प्रकारेणैवयागादिविषयस्य स्वर्गसाधनत्वादिमद्विशेष्यकत्वयागादि

अनुमानञ्च - इदं वाक्यं भ्रमादि विशिष्टज्ञानयो रन्यतरजन्यं, वाक्यत्वादिति ।

---

विषयकत्वाभ्यां स्वर्गसाधनत्वादि प्रकारक प्रतीतिविषयकस्य तात्पर्य ज्ञानस्य गुरोरप्यगत्या हेतुत्वमुपेयते, अतोनानुपादको वेदइतिमूलाशयः।

विशेषतोवाक्यार्थस्य तात्पर्यज्ञानविषयत्वे तात्पर्यग्रहमादायापि लौकिकवाक्यजन्यानुभवस्य गृहीताग्राहित्वसंभवात यदत्तज्ञानानुमाना दुपजीवि संसर्गानुमानाधीनां वाक्यार्थानुमिति माहायानुवादकत्वोपपा दनं तात्पर्यज्ञानस्याप्युपलक्षकमोध्यम् । पुंवाक्यविषयीभूतवाक्य प्रयोक्तारि यथार्थत्वेन विशेषितं वाक्यार्थज्ञानमनुमेय,तादृशवाक्यैवा तादृशज्ञानहेतुत्वम्, तदनुमानस्यवाक्यार्थसंसर्गानुमान मूलत्वात; तदनुमाने च वाक्यस्य भ्रमाद्यजन्यत्वे सति भ्रमप्रमासाधारणवाक्यार्थ ज्ञानजन्यत्वं हेतुघटकम् , अतः प्रथम तादृशवाक्यार्थ ज्ञानजन्यत्वसिद्धि रपेक्षितेति तदनुमान दर्शयति ( इदंवाक्यमिति ) बाधितार्थक ज्ञानद्वयात्मकभ्रमजन्ये विशिष्टवाक्यार्थज्ञानजन्यत्वाभावा द्व्यभिचारो माभू दिति भ्रमादिरूप दोषस्य साध्येन्तर्भावः । अयाग्रिम परिशेषानुमानसौकर्याय भ्रमनि रास आवश्यकः, पुरुषस्य च कस्मिंश्चिदर्थे भ्रान्तत्वनियमेन भ्रमसा मान्य निरासो बाधेनासंभवी, अतः प्रकृतवाक्यार्थगोचर भ्रमस्यैव निरसनीयतया प्रकृतवाक्यार्थभ्रमस्य साध्येन्तर्भावः, तथाच बाधित वाक्यार्थगोचर भ्रमाप्रसिद्ध्या साध्याप्रसिद्धिः यत्तु प्रकृतविशेष्ये प्रकृतविशेषणभ्रमो नविवक्षितः, अपितु प्रकृतविशेषणभ्रममात्र, पयः करणकत्वादिरूपव्यतिरेकि विशेषणस्य च दाहादौ भ्रमप्रसिद्ध्या न साध्याप्रसिद्धिरिति; तन्न, पयसासिञ्चतीत्यादिवाक्यप्रयोक्तारि दाहादौ पयःकरणकत्वादि प्रमवत्वं जानतः प्रकृतविशेषणगोचर भ्रमसा मान्यनिरासा संभवेन परिशेषानुमानानिर्वाहात प्रकृतवाक्ये यथार्थता त्पर्यावधारणासंभवात ; यदपि भ्रमपदं स्वात्रिषयविशेष्यत्वाकांक्ष प्रकृत विशेषण विषयकज्ञानपरं, तादृशज्ञानंच कर्यलिंगकानुमितिस्थलीय धर्मि ज्ञानकालीन तत्साकांक्ष तदबाधितधर्मविषयक ज्ञानान्तररूप मबाधित

वाक्यार्थस्थलेऽपि प्रसिद्ध्यर्थैवेति; तदपिन, वक्तरि तादृशज्ञानद्वय वस्थ दशायां तन्निरासासंभवेन विशिष्टज्ञानासिद्ध्या तात्पर्यावधारणासंभवात्, तदानीमपि शाब्दबोधस्यानुभाविकतया तज्ज्ञानस्यावश्यकत्वादिति चेन्न; सामान्यतएव भ्रमस्यनिवेश्यत्वात् । प्रकृतवाक्यार्थ भ्रमनिरासेवक्तरि अन्य विषयकभ्रमवत्त्वं जानतोपि तज्जन्यत्वस्याबाधितत्वेन भ्रमसामान्यजन्यत्वं प्रकृतवाक्ये सुग्रहं । सामान्यतोभ्रमत्वंच स्वनिरूपितत्व स्ववृत्त्यभाव प्रतियोगिनिष्ठत्वोभयसम्बन्धेन धर्मिविशिष्टाकांक्षावज्ज्ञानत्वम् । ज्ञानेच्छा कांक्षाया विशेषणतारूपाया विशेषणतासम्बन्धोपगमात् तस्य तद्वत्त्व निर्वाहः । नन्वेवमपि प्रकृतवाक्यार्थभ्रमाप्रसिद्ध्यावक्तरि तन्निरासो दुर्घटइति प्रकृतवाक्यार्थज्ञाने भ्रमत्वशंकासम्भवेन प्रकृतवाक्ये भ्रमा जन्यत्वनिश्चयासम्भवइति वाच्यम्, वक्तरि तन्निरासासम्भवेपि प्रकृत वाक्यार्थज्ञाने उक्तभ्रमात्वस्यान्यत्र प्रसिद्धस्य निरासंसम्भवेन प्रकृत वाक्ये भ्रमाजन्यत्वस्य सुग्रहत्वेन परिशेषसौकर्यात् ।

अथ प्रकृतवाक्यप्रयोजकस्य वाक्यार्थज्ञानस्य यत्र प्रकृतधर्मिण्य न्यविशेषणांशे न्यधर्मिणि प्रकृतविशेषणांशे वा भ्रमत्वग्रहः तत्र प्रकृत वाक्ये भ्रमाजन्यत्वासिद्धिः, तज्जनकज्ञाने भ्रमत्व निरासासम्भवात्, यदि च परिशेषहेतुघटकं भ्रमाजन्यत्वं भ्रमत्वघटकविषयत्वाप्रयोज्यत्वं, तच्च प्रकृतवाक्य प्रयोजकविषयतासामान्ये भ्रमत्वघटकत्वनिरासात्सु ग्रहमित्युच्यते, तदाप्रकृतवाक्यार्थे भ्रान्तत्वनिरासानुपयोगेन "अतएवा स्मिन्वाक्यार्थेयमभ्रान्तआप्तोवेति ज्ञातुमशक्य" मित्यग्रिमग्रन्थेन वाक्यार्थो प्रसिद्ध्या भ्रमनिरासानुपपत्त्याशंकाया असंगतिः, एवं वाक्यप्रयोग कारणीभूतवाक्येष्टसाधनताज्ञानीय किंचिद्विषयांशे यत्र भ्रमत्वग्रहः तत्र परिशेषासम्भवः, एवं प्रथमानुमानेन्यतर घटकविशिष्टज्ञानं यदि यत्किंचिद्धर्मिणि यत्किंचिद्धर्मविशिष्टज्ञानमात्रं विवक्ष्यते तदापरिशेषा नुमानहेतावपि भ्रमाजन्यत्वेसति तादृशज्ञानभ्रमा न्यतरजन्यत्वमेव निवेश्यं, तथासति वाक्यार्थान्तरज्ञानजन्य वाक्यान्तरप्रयोक्तरि प्रकृतवा

ध्यार्थे यथार्थज्ञानरूपसाध्यस्य व्यभिचारः; यदि प्रकृतविशेष्यसाकांक्ष
प्रकृतविशेषणज्ञानमेव व्यभिचारवारणाय परिशेषानुमानहेतौ निवे
श्यते तदा तादृशज्ञानत्वेन भ्रमस्यापि परिग्रहात् पृथक् भ्रमप्र
मान्यतरनिवेशोऽव्यर्थः, भ्रमाद्यजन्यत्वेसति तादृशज्ञानजन्यत्व
निवेशेनैवसामञ्जस्यात्; एवं सति तादृशज्ञानत्वेनैव वाक्यार्थज्ञानं निवे
श्य तज्जन्यत्वसाधनं परिशेषानुमानहेतुसिद्ध्यर्थं मुचितमिति भ्रमात्मक
वाक्यार्थज्ञानं पृथगन्तर्भाव्यान्यतरजन्यत्वसाधनविरोधः; नच विशिष्ट
ज्ञानपदं प्रकृतविशेष्य विशेषणोभय ज्ञानपरमेवेतिवाच्यम्, तथासति
परिशेषानुमाने तादृशज्ञानस्यैव प्रवेशनीयतया पयःकरणकत्ववर्तमान
कालीनसेकइत्यादि वाक्यस्यापि भ्रमाद्यजन्यतया सेकपयःकरणक
त्वोभय विषयक तादृशवाक्यार्थ ज्ञानजन्यतया न तत्प्रयोक्तरि पुं
सि हेतुसत्त्वेन पयःकरणकत्वविशिष्टसेकज्ञानरूपसाध्यस्यासत्त्वेन व्य
भिचारात् :- मैवं, प्रकृतविशेष्यक भ्रमत्वघटकस्य प्रकृतविशेषण
विशिष्टज्ञानत्वघटकत्वान्यतररूप यत्प्रकृतविशेष्यनिरूपित विषयिता
प्रयोज्यत्वमेव, भ्रमविशिष्टज्ञानान्यतरजन्यत्वं । भ्रमाद्यजन्यत्वं भ्रमत्व
घटकविषयित्वाप्रयोज्यत्वं । वाक्यार्थज्ञानजन्यत्वञ्च स्वाबाधितप्रकृतविशे
ष्यक साकांक्ष धर्मिनिरूपितत्वं, स्वधर्मिकप्रकृतविशेषणविषयक ज्ञाना
विषयतासाकांक्ष धर्मिनिरूपितत्वं वा, तावतापि पयसा सिञ्चतीत्यादिवाक्य
जनकस्य कूटलिङ्गकानुमितिस्थलीय सेकादिरूपधर्मि तद्धर्मपयःकरणक
त्वादिविषयक ज्ञानद्वयस्यापि संग्रहः । तत्संग्रहे तज्जन्यवाक्यप्रयोक्त
रि पयः करणकत्वविशिष्टसेकज्ञानरूप साध्यासत्त्वेन व्यभिचारात्तत्
प्रवेशावश्यकः । प्रकृतविशेषण विशिष्टज्ञानत्व घटकत्व च स्वविष
यकज्ञानविषय प्रकृतविशेषण साकांक्ष धर्मिनिरूपितत्वं । अत्रापि स्वं
धर्मि । एतच्छरीरे सेकादिरूपधर्मिण स्वसेकत्वादिना नप्रवेशः, अपितु
सामान्यरूपेणेति एतदन्तर्गततया सेकत्वाद्यवच्छिन्ने पयःकरणकत्वा
दिविशिष्टज्ञानविषयत्व रूपविशेषणसंसर्गभाषकज्ञानाप्रसिद्ध्या नपरिशेषा

शेषानुमानं विनापि भ्रमत्वाघटकनिरुक्तसाध्य घटकानुगतरूपवद्विष यिताकत्वस्य सेकादौग्रहेण तेनैव हेतुना पयःकरणकत्वादिसंसर्गसाधनं सम्भवतीति चेत्? सत्यम् । तथापि यत्र निरुक्तविषयितायां भ्रम त्वाघटकत्व मगृहीत्वैव प्रकृतवाक्ये शब्दादिना भ्रमत्वघटकविषयिता प्रयोज्यत्वग्रह स्तत्र परिशेषानुमानस्योक्तविषयितायां भ्रमत्वाघटकत्व ज्ञानानपेक्षितया तत्स्थलाभिप्रायेण तदादरः । प्रकृतवाक्यार्थप्रज्ञा त्वापि प्रकृतवाक्य प्रयोजकविषयितात्वादिना वाक्यार्थविषयितायां भ्रम त्वाघटकत्वनिश्चयेन वाक्ये भ्रमत्वघटकविषयिताप्रयोज्यत्वनिश्चयसम्भ वेऽपि प्रकृतवाक्यार्थविषयितात्वेनैव भ्रमत्वाघटकत्वनिश्चयोऽपेक्षित इत्य भिमानेनापाततोऽस्मिन्वाक्यार्थे इत्यादिशंकनमिति तद्विरोधो किंचित्करः । अथवा स्वबाधितधर्म साकांक्षधर्मिज्ञानं भ्रमपदार्थः ।

अथ यत्र कूटलिङ्गक प्रमानुमित्युत्पादस्यानाभिप्रेतताबाधित धर्म धर्मिविषयक ज्ञानद्वया द्विशिष्टार्थकवाक्यप्रयोग स्तत्रवाक्ये उक्तान्यतर जन्यत्वाभावाद्व्यभिचार इति चेन्न ; तत्र मिथस्साकांक्षधर्मधर्मिविषयक ज्ञानजनकव्यापारादि भ्रमप्रयोज्यतयैव निरुक्त साध्यसत्त्वात् । विशिष्ट ज्ञानपदं वा स्वाबाधितधर्मसाकांक्ष धर्मिविषयक ज्ञानपरं, तथात्वञ्च ज्ञानं सत्त्वविषयधर्मसाकांक्षधर्मि ज्ञानसाधारणमपीति सामञ्जस्यात् । तन्मते वर्णानां नियतयाजन्यपदं जन्यानुपूर्वीकार्थकंवाच्यम् । प्रतारणस्थलेऽपि विपरीतविशिष्टार्थं प्रत्ययित्वापि वाक्यरचनया तत्र प्रकृतवाक्यार्थज्ञाना जन्यत्वा द्व्यभिचार इति प्रतारणाया आदिपदेन परिग्रहः । नच प्रतारणास्थले आहार्यवाक्यार्थ ज्ञानस्यावश्यकतया न व्यभिचार इति वाच्यम्, स्वप्रतीत विपरीतप्रत्यायनेच्छातो वाक्यार्थज्ञानं विनापि त द्विशेष्यक तत्प्रकारकज्ञानवाक्यार्थज्ञानं ज्ञात्वा तत्प्रतीतीच्छया वाक्य रचनासम्भवात् । नचैवमप्रतारकस्यापि तादृशरीत्या वाक्यार्थज्ञानं विना वाक्यप्रयोगसम्भवात् प्रतारणाया आदिपदेन ग्रहणेऽपि व्यभिचारो दुर्वार एवेति वाच्यम्, यतस्स्वप्रतीतविपरीतार्थप्रत्यायनेच्छा नात्र प्रतारण

## ततो भ्रमादिनिरासेसति परिशेषाद्वाक्यार्थज्ञाना

---

पदेन विवक्षिता, अपितु स्वाप्रतीतार्थप्रत्यायनेच्छैव, एवं च वाक्यार्थ ज्ञानानधीन वाक्यार्थप्रत्यायनेच्छामात्रस्य साध्यघटकतया नोक्तस्थले व्यभिचारः । एवं प्रमादोप्यादिपदेन ग्राह्यः । प्रमादश्चानुपूर्व्यन्तर निर्वाहकमनवधानम् । यत्र घटोनास्तीति प्रतिपादनेच्छया घटोनास्तीति वक्तव्ये नकारमनुच्चार्य घटोस्तीति प्रयोगः, प्रमादस्य तादृशवाक्य घटकत्वे तत्र घटासत्त्वरूपवाक्यार्थप्रतिपादनेच्छाधीन वाक्यत्वरूपलिङ्गमस्ति नतु तादृशवाक्यार्थ ज्ञानजन्यत्व, भिन्नविषयकत्वादिति व्यभिचारस्स्यात् ; अतस्तत्रसाध्यसत्त्वाय तदुपादानम् । करणापाटवमप्यादिपदग्राह्यम् । तत्र करणस्य कण्ठादिरूपवर्णस्थानस्या पाटवं एकवर्णस्थानस्या परवर्णस्थानत्व भ्रमविषयत्वम् । यत्रघटास्तित्व प्रतिपादनेच्छया घटोस्तीति वर्णानामुच्चारणे कर्तव्ये कण्ठे ओष्ठ्यपकारस्थानत्व भ्रमेण तदुपादानकप्रयत्नात्तच्चेष्टोत्पत्त्यात्तत्संयोगेन पकारोत्पत्तौ पटोस्तीतिवाक्य मुच्चारितं भवति तस्य भिन्नविषयकत्वेन न वक्तृवाक्यार्थ ज्ञानजन्यत्वमिति करणापाटवोपादानादेव तत्रसाध्यसत्त्वनिर्वाहः । साध्ये हेतौ च प्रकृतविशेष्य विशेषणयो र्यत्पदेनोपादाय सामान्य व्याप्त्या दर्शनसद्भाववदिति दृष्टान्तसंगतिः ( भ्रमादिनिरासेसतीति ) वक्तर्यनुमानादिना भ्रमादिरूपदोष चतुष्टयाभावनिर्णये सतीत्यर्थः । प्रकृतवाक्यार्थगोचर भ्रमाभावसिद्धिः प्रकृतवाक्यार्थ विषयितावच्छिन्न बाधित धर्मप्रकारक धर्मिविषयकत्वरूप भ्रमत्वस्य तादृशधर्मिनिरूपित तत्त्वस्य वा अभावसिद्धिपर्यवसितेति प्रागुक्तम् । तत्सिद्धिप्रयोजकं चाय वक्ता भ्रमत्वशून्यप्रकृतवाक्यार्थ ज्ञानकः, भ्रमत्वाघटकयथार्थीयं प्रकृतवाक्यार्थ विषयिताकोपा निर्दोषलिङ्गादिना अभ्यासगृहीत-प्रकृत वाक्यार्थत्वादित्यनुमानम् । एव मपतारकार्थं । एकविशेषाभाव सहकृत सामान्यघटिता परिशेषसाधकहेतु रेव परिशेषपदार्थः । तादृश

नुमानं – अयं वक्ता स्वप्रयुक्तवाक्यार्थ यथार्थ ज्ञानवान् ;

---

अयं वक्तेति वक्तृपक्षकानुमान हेतुतापि, तस्य भ्रमादिजन्यत्वाभाव सहित भ्रमाद्यन्यतरजन्यत्व रूपसामान्याभावात्मकत्वेऽपि तद्घटितत्वात्, वाक्यार्थ यथार्थज्ञान जन्यत्वरूपा परविशेषसाधकत्वविरहेऽपि वाक्य जनकत्वस्य साध्यतावच्छेदक कोटिप्रवेशेन तादृशविशेषण साधक त्वात् । वाक्यार्थज्ञानेत्यस्य यथार्थेत्यादिः । परिशेषानुमान प्रयोगारूढ़ माह ( अयमिति ) ( स्वप्रयुक्तवाक्यार्थ यथार्थज्ञानवानिति ) स्वप्रयुक्त यद्वाक्यं तदर्थगोचरयथार्थ ज्ञानवा नित्यर्थः । यथार्थज्ञानं च तन्मते विशिष्टज्ञानमेव । तदभिप्रेतो यथार्थज्ञानविषयत्वरूपपदार्थ पक्षकानु मानहेतुः पक्षे नासिद्धयतीति तन्निवेशः ।

अत्र सेकः पय करणक इत्यादिज्ञानस्य तत्पुरुषप्रयुक्त वाक्यार्थ विषयकत्वेन पयसासिध्यतीति वाक्यार्थविषयकत्वेन साध्यसिद्धावपि सेकत्वावच्छिन्ने पयःकरणकत्वादि संसर्गसाधक तद्विशिष्टज्ञान विषय त्वा[त्व]ज्ञानेतत्रतासंसर्गसाधकवक्ष्यमाणानुमाना निर्वाहइसिसेकादिविषय क पयःकरणकत्व विशिष्टज्ञानत्वरूपेण साध्यत्व विवक्षितम् । तेन रूपेण ज्ञानसिद्धौ च सेकत्वावच्छिन्ने तादृश विशिष्टज्ञान विषयत्वं ज्ञाननिष्ठ तद्विषयकत्व तन्निष्ठज्ञानविषययो स्तुल्यतया सिद्ध्यति । हेतुः भ्रमाद्यजन्य त्वविशेषित निरुक्तसेकादिविषयता प्रमादाद्यन्यतर प्रयोज्यवाक्यप्रयो क्तृत्वं, अतोन पयःकरणकत्वाविशिष्ट सेकज्ञानशून्ये भ्रमाद्यजन्या त्यार्थकवाक्यप्रयोक्तरि व्यभिचारः । यो भ्रमाद्यजन्य यद्विशेषणविशेष्य घटितोक्तान्यतर प्रयोज्य वाक्यप्रयोक्ता स तद्धर्मविशिष्ट तद्धर्मिविषय क ज्ञानवानिति सामान्यतोव्याप्तिः । अतएववाक्यार्थभ्रमजन्य वह्निनास्ं

भ्रमाद्यजन्यवाक्यप्रयोक्तृत्वात् , अहमिवेति । नत्वाप्तत्वात् , साध्याविशेषात् । ततएतेपदार्था यथोचित संसर्गवन्तः,

---

घटमित्यादिवाक्यप्रयोक्तरि तादृशवाक्यार्थगोचर यथार्थ ज्ञाना प्रसिद्ध्या तद्घटित साध्यस्या सिद्धिहेतुना प्रसक्तं व्यभिचारं वारयितुं ( भ्रमाद्यजन्येति ) भ्रमाद्यजन्यत्वं पूर्वोक्तवक्तार्थकम् । आदिपदा त्प्रतारणा प्रमादकरणा पाटवानां परिग्रहः । प्रतरणा जन्यान्यत्वोपादाना त्पूर्वोक्तरीत्या वाक्यार्थज्ञानं ज्ञात्वापिवंचनेच्छारूप प्रतारणया यद्वाक्य प्रयुज्यते तद्वाक्य स्य तद्वाक्यार्थज्ञानाजन्यत्वेपि तद्वाक्यार्थज्ञानप्रतारणान्यतर जन्यत्वसत्वा द्धेतु घटकविशेष्य दळसत्वा त्तत्प्रयोक्तरि तद्वाक्यार्थ ज्ञानाभावेपि न व्यभिचारः । एवं प्रमादकरणापाटवयो रुपादानात तदन्यतर जन्यत्वावावच्छिन्नमेव वाक्येसिद्धं, ननु तद्धर्मसाकांक्ष तद्धर्मज्ञानरूप वाक्यार्थ ज्ञानजन्यत्वावावाच्छिन्नम् , तादृशज्ञानजन्यत्वस्य साध्यतानव च्छेदकत्वात् । अतोवाक्यार्थज्ञानजन्यत्वमुपेक्ष्य वाक्यार्थज्ञानान्य तम जन्यत्वेनैव वाक्यं विशेषितम् । नचा सिद्धिमात्र वारकत्वेन प्रतार णादि विशेषणवैयर्थ्यम्, यथासन्निवेशे अवैयर्थ्यात् ( अहमिवेति ) भ्रमाद्यजन्यघटमित्यादिवाक्यप्रयोक्ता वाक्यार्थगोचरयथार्थज्ञानवांश्च । अहमिवेत्यनंतरमिति पदं पूरणीयम् । तेनसहानुमानं चेति पूर्वोक्तं संबद्ध्यते ( नत्वाप्तत्वादिति ) हेतूक्तार्थविशेषः । ( साध्याविशेषा दिति ) प्रकृतवाक्यार्थ गोचरयथार्थज्ञानवत्त्वस्याप्तपदार्थत्वादितिभावः । भ्रमादिदोषशून्यत्व रूपाप्तत्वस्य हेतुत्वेच शुकादौ व्यभिचारः, तच्छू न्यत्वेसति प्रकृतवाक्यार्थ ज्ञानवत्वचासिद्धम् , पूर्वानुमानस्य विशिष्यवि शेष्यासाधकत्वात् , एवं सामान्यतो भ्रमाभावः पुरुषेऽसिद्धः, प्रकृतवा क्यार्थभ्रमश्चा प्रसिद्धइति न तच्छून्यत्वस्य हेतुप्रवेशसंभवः, भ्रम त्वाभाववत्प्रकृतवाक्यार्थं ज्ञानवत्वंच साध्यपर्यवसितमेवेतिभावः ( एते पदार्थाइति ) सेकादयइत्यर्थः ( यथोचितसंसर्गवन्तइति ) पयः करण

:यथार्थज्ञान विषयत्वात्:

---

त्वादि प्रतियोगिकतात्पर्यविषय संसर्गवत इत्यर्थः । तात्पर्यविषयसंसर्गस्यापि न तत्त्वेन निवेश, तेन रूपेण तस्य वाक्यार्थाघटकत्वात्, अपि तु तात्पर्यविषयतावच्छेदकाधाराधेयतात्वादिरूपेण । वस्तुत स्संसर्गस्य संसर्गविधयैव वाक्यार्थ घटकतया तत्तात्संबंधेन प्रकृतविशेष्ये प्रकृत विशेषणमेव साध्यतया निवक्षितं ( यथार्थज्ञानविषयत्वादिति ) तत्तत्सं बंधेन तत्तद्विशेषणकविशिष्ट बुद्धिविषयत्वादित्यर्थः । तत्तात्संबन्धेन तत्तद्विशेषणक ज्ञानत्वंच तत्तात्संबंधावच्छिन्न स्वनिरूपिताकांक्षा व तद्धर्मिविषयताकत्वम् । आकांक्षाच विशेषणनिष्ठा विशेष्यनिरूपिता विशेषणताख्याविषयतैव । साच तन्मते विशिष्टज्ञानाविषयेणापि संबंधे नावच्छिद्यते । तथाच तात्संबंधावच्छिन्न तद्धर्मनिष्ठविशेषणताख्य स्व-विषयितानिरूपितज्ञानविषयत्व मत्र हेतुः । स्वज्ञानम् । यत्संबंधाव च्छिन्न यन्निष्ठविशेषणताख्य स्वविषयतानिरूपित ज्ञानविषयत्व यत्र तत्र तेनसंबंधेन तद्वृत्तित्वमिति सामान्यतोव्याप्तिः । तेनयत्पदार्थस्य यादृशसंबंधः क्वचिदपि येनपुंसा नगृहीत स्तेनसंबन्धेन तद्धर्मविशिष्टज्ञा नविषयत्वया तस्यापि प्रकृतविशेष्ये तदीयतादृशसंबन्धरूपसाध्याध सिद्धिः ।[ संबंधविशेषावच्छिन्न स्वाकांक्षायानिवेशात् ] साध्यहेत्वोरेक संबन्धानिवेशात् कालिकादिसंबन्धेन पयःकरणकत्वादिविशिष्टबुद्धि विशेष्यदाक्षादौ दैशिकस्वरूपादिसंबन्धेन पयःकरणकत्वादिविरहेपि न व्यभिचारः । विशेषणतारूपाकांक्षायां तज्ज्ञानीयत्वनिवेशा त्तद्धर्म भ्रमविषये तत्संसर्गविरहेपि न व्यभिचारः । विशेषणतारूपाकांक्षा निवेशा द्विशेष्यसंबन्धाननुयोगिनि विशेषणे विशेष्यवत्त्वविरहेपि विशे ष्यतारूपाकांक्षा निरूपितविशेषणता रूपविषयत्व सत्त्वेपि न व्यभि चारः । वस्तुपक्षकानुमाना त्सेकादिविशेष्यकपयः करणकत्वादि प्रका रकयथार्थ ज्ञानसिद्धावपि सेकादौ तादृशज्ञानविशेष्यत्वरूपहेतु मं

आप्तोक्त पदस्मारितत्वाद्वा, मदुक्त पदार्थवदिति ।

ननु – वक्तु ज्ञानविशेषोनुमेयः, ज्ञाने

---

सिद्धः, अनुमाने तुल्यवित्तिवेद्यतायां मानाभावादतोहेत्वंतरमाह (आप्तोक्तेति) स्व विशेष्यक तत्संबन्धक तद्विशेषणक ज्ञानविशेष्यत्वा सिद्धावपि सेकादिविशेष्यकविशिष्टज्ञानासिद्धौ तत्रतस्यतुग्रहत्वान्नासिद्धिरितिभावः (मदुक्तपदार्थवदिति) स्वविशेष्यकघटादि विशिष्टज्ञानवता मया प्रयुक्तपदेन स्मारितं घटादिसंसर्गवत् कर्मत्वादिकमित्यर्थः । मदुक्तत्वकथनं आप्तोक्तत्वगर्भहेत्वभिप्रायेण । "इती" त्यनंतरमनुमेयमिति पूरणीयम् । तेनैव समं तदनंतरमित्यर्थकं "तत" इति पूर्वोक्तं संबद्ध्यते ।

अथ वक्तृज्ञानानुमाने प्रकृतवाक्यार्थज्ञानमेव साध्यमुपगंतव्यम्, तस्य च वाक्यांतरार्थ ज्ञानसाधारणरूपेण साध्यत्वे तेनैव रूपेण तस्य प्रकृतवाक्यार्थसाधकहेतौ प्रवेश्यतया दाहादावपि हेतुसत्वेन तत्रपयःकरणकत्वादि संसर्गवत्त्वाभावेन व्यभिचारस्तस्मादितरयथार्थान्तर ज्ञान व्यावृत्तरूपेण तस्य साध्यता स्वीकार्या, तच्चरूपं प्रकृतवाक्यार्थविषयकत्वमेव, तस्य च वक्तृज्ञानानुमितेः पूर्वं दुर्ज्ञेयतया न व्याप्तिग्रहसंभवः; नच विशेष्यमनन्तर्भाव्य तत्तद्विशेषण विशिष्टज्ञानत्वेनैव साध्यतास्वीकरणीया, तथाच न साध्यस्य वाक्यार्थ घटितत्वमिति वाच्यं, तथासति वाक्यार्थ साधकानुमानपक्षसेकादिरूप विशेष्यपदार्थे पयःकरणकत्वादि विशिष्टज्ञानविषयत्वादिरूपहेत्वसिद्ध्या वा यथार्थसाधकानुमानानवतारा दित्येतत्सामान्यव्याप्त्या अप्रसिद्धसाध्यसिद्धिर्नविचारसहा, एकव्याप्तेः साध्यान्तरसाधकत्वेऽति प्रसंगादित्याशयेनशंकते (नन्विति) (वक्तुर्ज्ञानविशेषइति) वाक्यान्तरार्थ ज्ञानव्या

चार्थएवविशेषः, नत्वर्थाधीनोन्यः, " अर्थेनैव विशेष " इत्यौपचारिकी तृतीया,

---

स्वस्वरूपावच्छिन्नं मुक्तज्ञानमित्यर्थः । " अर्थएव " – अर्थविशेषविषयकत्वमेव । " विशेषः " – अर्थान्तरज्ञानव्यावर्तकरूपम् । " अर्थाधीनोन्यः " – अर्थाधीनपदार्थान्तरम् । मानाभावादितिशेषः ।

नन्वेवं " अर्थेनैवविशेषोहि निराकारतयाधिया " मित्याचार्यकारिकायां विशेषस्य व्यावर्तकरूपस्य हेतुतृतीयया अर्थाधीनत्व कथनविरोधइत्यतआह ( अर्थेनैवेति ) " औपचारिकी "– अभेदलाक्षणिकी । तथाच ' धियां '– बुद्धीनां, ' विशेष. ' – अर्थान्तरज्ञानव्यावर्तकरूपं, ' अर्थेनैव ' – अर्थादर्थविषयकत्वाद्वा अभिन्नएव, नतु तद्भिन्नः । साकारवादिमते विषय विषयिभाव नियामकतया घटादिज्ञानस्य स्वात्मक घटादिविषयकतया विषयभेदप्रयुक्ते घटत्वपटत्वादिरेवभेदकः, नतु ज्ञानातिरिक्तो विषयस्तद्भेदक., बाह्यार्थस्या स्वीकारादिति तन्म तेर्थस्यैव भेदकत्वमनुपपन्नं, अतस्तन्मतं प्रतिक्षिपति (निराकारतयेति ) बाह्यार्थभंगे कदाचिद्घटाकारं कदाचित्पटाकारं ज्ञानमित्यत्र विषयेंद्रिय सन्निकर्षादेर्नियामकत्वासंभवा द्बाह्यार्थस्य प्रामाणिकत्वे मानाभावे च ज्ञानस्य घटपटादिस्वरूपतात्मक तत्तदाकारताविरहेणेत्यर्थः । [ इतिकारिकाव्याख्या । ]

नतु सुब्विभक्ते रनुशासनिकातिरिक्ते ऽर्थे लक्षणया साधुत्वे कर्तृत्वाद्यर्थे षष्ठ्यादिविभक्ते रनुशासनमफलम् , अनुशासनं विनापि तृतीयाया अभेदार्थकत्वइव कर्तृत्वाद्यर्थे षष्ठ्यादे र्लक्षणया साधुत्वस्य भवात्; " सुपां सुलुगि " त्यादिसूत्रे व्यत्ययानुशासन मप्यफलं, तत्फलंत्वादेशेनस्वादिना देशिनोमादे रुपस्थापने कर्मत्वादिबोधोपपादनम् , सुब्विभक्तौ लक्षणास्वीकारेत्वा मादेरनुपस्थापनेपि स्वादिन

तथाच वाक्यार्थज्ञानविशेषो नुमेयः, तस्य चा प्रसिद्ध्यानव्याप्तिग्रहः, अतएवास्मिन्वाक्यार्थे ऽयमभ्रांत आप्तोवेति ज्ञातुमशक्यमिति शब्दएव तमर्थं बोधयेदितिचेन्न;—तात्पर्यावधारणार्थं त्वयाप्य

---

लक्षणया कर्मत्वादिबोधनसंभवइति, एव मनुशासनं विनापि विभक्ते रर्थान्तरबाधुके "द्व्येकयोर्द्विवचनैकवचने "इत्यनुशासनमप्यफल, एकं एकत्व वक्तीत्यन्वर्थैकवचनसंज्ञासामर्थ्या द्वेकवचनादे रेक त्वाद्यर्थकताळाभात् ।

अत्रकेचित् उक्तानुशासनसार्थक्यापेक विभक्ते रपरविभक्त्यर्थ लक्षणानुपगमा दभेदस्य विभक्त्यर्थंतरार्थत्वविरहेण तत्रतृतीयालक्षणाया मुक्तिवक्तौ न लक्षणेति प्रवादाविरोध इत्याहुः ।

मिश्रास्तु - विशेष इतरव्यावृत्तिः, अर्थस्येतरभेदानुमितौ लिंगत्वेपि लिंगज्ञानस्यैवानुमितिजनकतया येपदमप्यर्थज्ञानलाक्षणिकमित्यौपचारि कः प्रयोगः तृतीयाया औपचारिकत्वमिति व्याचक्रुः ।

( वाक्यार्थज्ञानविशेषइति ) प्रकृतवाक्यार्थविशेषितं ज्ञानमित्यर्थः। "तस्य" - तादृशज्ञानस्य । "अप्रसिद्ध्या" - वाक्यार्थाग्रहेण वक्तृज्ञानानुसरणज्ञानेन । "अतएव' - वाक्यार्थस्य पूर्वमग्रहादेव ( आप्तइति ) प्रतारणा स्वपदोपरहितइत्यर्थः. ( इति ज्ञातुमशक्यमिति ) सर्वत्रार्थे भ्रांतत्वस्याप्तत्वस्यवा क्वापि पुंस्यसत्त्वेन प्रकृतवाक्यार्थं मन्त भ्राप्य स्वीकरणीय मीदृशज्ञानमशक्यमित्यर्थः ( शब्दएवेति ) एवकारेण वक्तृज्ञानानुमिति व्यवच्छेदः । एवं च शब्दस्य नानुवादकत्वं मित्या शय ( तात्पर्यावधारणार्थमिति ) उक्तयुक्तिभि स्तात्पर्यज्ञानस्य हेतुताया

शाब्द्या एव संसर्गविशेषप्रतीते रवश्याभ्युपेयत्वात् । अन्यथा क तात्पर्यनिरूपणं । अतएवाप्तोक्तत्व भ्रमाद्यजन्यत्व निरूपणमपि सुकरं। शाब्दं तु संसर्ग ज्ञानं प्रथमं नभवति, ज्ञानांतरं तु भवत्येव । नचैवं

---

स्तथा त्वावश्यकत्वादिति भावः । "संसर्गविशेषप्रतीतेः" – प्रकृत वाक्यार्थप्रतीतेः ( अवश्याभ्युपेयत्वादिति ) तथाच तदर्थं वक्तृवाक्यार्थ ज्ञानानुमानस्य भवतापि स्वीकरणीयतया तदुपायानुसरणं द्वयो रेवा वश्यकमिति भाव । "अन्यथा" – शाब्दबोधा त्पूर्वं मशाब्दवा-क्यार्थप्रतीत्यनभ्युपगमे ( कतात्पर्यनिरूपणमिति ) वाक्यार्थविशेषोपरक्त तात्पर्यज्ञानासम्भव इत्यर्थः । "अत एव" – अशाब्दवाक्यार्थज्ञानस्य प्रागभ्युपेयत्वा देव ( आप्तोक्तत्वेति ) वाक्य इत्यादिः । "निरूपणं" – निर्णयः ( सुकरमिति ) वक्तरि प्रकृतवाक्यार्थभ्रमादिनिरास सम्भवादिति भावः । अयं चाभ्युपगमवादः, वाक्यार्थ महात्वापि स्वयं भ्रमत्वाभावुवरप्रकृतविशेष्यसाकांक्ष प्रकृतविशेषणज्ञानक इत्यादि रीत्या वक्तरि प्रकृतवाक्यार्थभ्रमादिनिरासस्सम्भवेन परिशेषानुमान निर्वाहात् । अन्यथा परिशेषानुमानानन्तर मेव संसर्गानुमाना त्परि शेषानुमान निर्वाहकभ्रमादिनिरासे संसर्गानुमानापेक्षया न्योन्याश्रया पातात । ननु वाक्यार्थज्ञाने तात्पर्यधियो हेतुतया तात्पर्यज्ञान मपेक्षणीयं, वाक्यार्थज्ञानं च प्रथमतः कथं भवे दित्याशंकां निराक-रोति ( शाब्दमिति ) "प्रथमं" – तात्पर्यज्ञाना त्पूर्वम् । "न भवति" तत्रैव तात्पर्यज्ञानस्य हेतुत्वादिति भावः । "ज्ञानान्तरं" – आनु मानिकसंसर्गज्ञानं ( भवत्येवेति ) तत्र तात्पर्यज्ञानाहेतुत्वादिति भावः ( नचैवमिति ) "एवं" – शाब्दा त्पूर्वं तात्पर्यज्ञानानुरोधेना

शब्दोनप्रमाणं, तदर्थस्य प्रागेवासिद्धेरितिवाच्यं; तत्रापि तुल्यत्वात्। ननु तथापि कथमर्थविशेष सिद्धिः, विशेषेणव्याप्त्यग्रहादिति चेन्न;—यथायो यत्र प्रवर्तते सतज्जानातीति सामान्यतो व्याप्ति ज्ञाने पाकादौ प्रवृत्तिदर्शना त्पाकविषयककार्य

---

शाब्दवाक्यार्थधीस्वीकारे (नप्रमाणमिति) अननुभावक मित्यर्थः। भवेदिति शेषः (प्रागेव सिद्धे रिति) प्रागेवानुमानतः प्रवृत्त्यादि क्षमज्ञानानिष्पत्ते रित्यर्थः। (तत्रापीति) तात्पर्यज्ञानहेतुतायां अनप वादादितिभावः। ननूपायाभावेन प्रकृतवाक्यार्थां सिद्धौ तात्पर्यस्य दुरवधारणतया तज्ज्ञानहेतुताया बाधकप्रसक्तत्वेन युक्तिसहस्रेणापि तत्साधनमशक्यमिति तदहेतुत्वे दर्शितानुपपत्तयोऽन्यथैव समाधेया इत्याशयेन पृच्छति (नन्विति) (तथापीति) तात्पर्यज्ञाने नियमतो वाक्यार्थज्ञानापेक्षणेऽपीत्यर्थः। "अर्थविशेषसिद्धिः"- विशिष्य प्रकृतवाक्यार्थसिद्धिः (विशेषेण व्याप्त्यग्रहादिति) प्रकृतवाक्यार्थ ज्ञानस्य प्रागसिद्ध्या विशेषरूपेण तद्व्याप्तिग्रहा त्परिशेषानुमानासंभ वा त्संसर्गानुमानाप्रवृत्तेरित्यर्थः। 'साध्यहेत्वो रेकपदार्थघटितत्वे प्रकृतहेतुसाध्यसजातीयहेत्वन्तर साध्यान्तरयो र्व्याप्तिग्रहादपि प्रकृतहेतौ पक्षधर्मता ज्ञाना त्पक्षे प्रकृतसाध्यस्या प्रसिद्धस्यापि सिद्धिः, अन्यथा पाकादिविषयककार्यताज्ञानादे विशेषतोऽज्ञानेऽपि स्तन्यपानादिकार्यता ज्ञान सध्रीचर प्रवृत्त्या व्याप्तिग्रहप्रयोज्यवृद्धादौ पाकादिकार्यताज्ञाना देरसिद्ध्यनुपपत्तेः व्युत्पत्त्यानिर्वाहादिति समाधत्ते (नयथायइति) (जानातीति) कार्यतयाव्याप्तिः। सामान्यतो व्याप्तिग्रहापेक्षा च प्रकृतहेतुजातीये क्वचि त्साध्यजातीयव्यभिचारग्रहे सामान्यव्याप्त्यचानुमित्य नुदयात्। नच पाकरूपपक्षे प्रवृत्तिविषयत्वरूपहेतुना कार्यताज्ञान विषयत्वसाधनेनैव पाकविषयक कार्यता ज्ञानसिद्ध्या न्यदीयव्याप्तेर

ता ज्ञानानुमानं, यथाच चेष्टाविशेषदर्शना द्दश संख्याभिप्रायमात्रज्ञाने घटे तच्चेष्टादर्शनाद्घटे दशत्व ज्ञानं, तथा सामान्यतो व्याप्त्यात्रापि विशेषसिद्धिः ।

---

न्यसिद्ध्यौपयिकत्व मप्रामाणिकमितिवाच्यं, तावता प्रवृत्तपुरुषीय
पाकक्रार्यताज्ञानसिद्ध्यनिर्वाहा त्पुरुषे कार्यता ज्ञानसंशयानिवृत्तेः,
तत्पुरुषीय तत्कालीनकार्यता ज्ञानएव प्रयोज्यवृद्धवाक्यान्वय व्यति
रेकानुविधानग्रहेण शब्दस्यानुभावकत्वसिद्धे स्तादृशकार्यता ज्ञान
सिद्धेरावश्यकत्वाच्च । मिश्रास्तु एतदनुशयस्यैव स्पष्टांतरात्तु स्मरण
बीजत्वमाहुः (चेष्टाविशेषेति) यदीय संख्याविशेष प्रत्यायनेच्छा
धीनं यद्दशाङ्गुल्युत्क्षेपणं स तदीयसंख्याविशेषाभिप्रायपूर्वक मिति
सहचारदर्शनं घटादिक मनंतर्भाव्य यत्रजातं तत्र कतिघटास्सन्तीति
प्रश्नानंतर दशाङ्गुल्युत्क्षेपणं दृष्ट्वा घटविषयक घटीयदशत्व संख्याभि
प्राय॰ ज्ञात्वा घटं तादृशाभिप्रायपूर्वकत्वयो र्व्याप्त्यादिविषयत्वेन
दशत्वसंख्यामनुमिनोति, तत्रघटीयदशत्व संख्याभिप्रायपूर्वकमिति सा
मान्यव्याप्त्या तादृशचेष्टादर्शना द्दशत्वसंख्याभिप्रायस्य सामान्यतएव
ग्रहसंभवेपि सामान्यतोव्याप्त्यैव घटदशसंख्याभि प्रायविषयत्व ज्ञानमि
त्यर्थः । नच तद्घटं पक्षीकृत्य दशाङ्गुल्युत्क्षेपण प्रयोजकसंख्यावि
शेष प्रत्यायनेच्छाविषयत्वेन हेतुना दशसंख्याभि प्रायविषयत्वस्य
ताद्रूप्येण व्याप्त्यैव संभवादुद्देश्यसिद्धिः,'अतएवमिश्राणा मुक्तानुशये
न यथावेत्यादि फक्किकावतारणमयुक्तमितिवाच्यम् , यथोक्तहेतावुक्त
साध्यस्य ताद्रूप्येण सहचारज्ञान नास्तीत् एवं यत्रद्व्यादिसंख्याभि
प्रायविषयघटादावेव द्व्यादि संख्याभिप्रायक द्व्याद्यङ्गुल्युत्क्षेपणं
दृष्ट्वा यदीय प्रतीतीच्छाधीनं यत्संख्याङ्गुल्युत्क्षेपणं तत्तद्विषयक तत्संख्या

ततएते पदार्थाः परस्पर संसर्गवंतः, साकांक्षत्वे सत्ये कज्ञानविषयत्वात्, सत्यरजतज्ञानविषयवदिति । एवं वक्तु र्यथार्थ वाक्यार्थज्ञानेनुमिते प्रकरणादिना वक्तभिप्रेत यथार्थप्रतीतिपरत्वज्ञानं, ततो वेदतुल्य तया शब्दा दर्थप्रत्यय इत्यनुवादकश्शब्दः; वक्तृज्ञा नावच्छेदकतया तद [संसर्गज्ञाना] नुमाना त्तदुप जीवि संसर्गानुमानाद्वा वाक्यार्थस्य प्रागेवसिद्धेः ।

---

तदर्थश्च प्रमाप्यजन्य कर्मत्वादि साकांक्षपदत्वादिप्रतीतीच्छयो च्चरितत्व तत् कर्मत्वादो घटादिविशिष्टज्ञानजनकं मदीयं घटमित्यादिवाक्य मिवेति । एतदनन्तरं ह्यर्थवानुमेय मिति पूरणीयम् । “ तत ” इत्यस्य एवमित्यस्य पूर्व पूरणीया ह्मानमित्यनेन सम्बन्धः । “ एतेपदार्था ” इत्यादिकं पूर्व वद्व्याख्येयम् ।

( सत्यरजतज्ञानविषयवदिति ) रजतत्वविशिष्ट ज्ञानविषयरजत वत्संसर्गि धर्मिवदित्यर्थः । शब्दस्यानुवादकत्व मुपसंहरति ( एव मिति ) ( वेदतुल्यतयेति ) वेदस्थले फलसामग्रीसमवहिततयेत्यर्थः । ( तदनुमानादिति ) वक्तृज्ञानानुमाने साध्यतावच्छेदकतयेतिशेषः । “ सिद्धे ” रित्यग्रिमेणान्वयः । एत याथार्थ्यघटितसाध्या भिप्रायेणोक्तम् । याथार्थ्यस्य प्रकृतविशेषणत्वाद्विशेष्यकात्व रूपतया वाक्यार्थस्य तत्र प्रवेशात् । तदनुमाने विशिष्टज्ञानत्वेन साध्यत्वेतु न तत्सिद्धिरित्याशयेनाह ( तदुपजीवीति ) नचेत्यादिना आभिदि तावित्यादिः ( सिद्धेरिति ) यथार्थ तज्ज्ञानानुरोधेन नियमतस्स्वीकार्य त्वादितिशेषः । प्रमाप्यभावानुमानानन्तरं वक्तृज्ञानान्तरमभ्युपगम्यैव

यत्तु तत्संसर्गाग्रहो भ्रमः, तदभावश्च संसर्गग्रहएवेति भ्रमाभावेनुमीयमाने संसर्गज्ञानमेवानुमितमित्याप्तत्वानुमानांतर्गतमेव वक्तृज्ञानानुमानं, नतु वक्तृज्ञानानुमाने तल्लिङ्गमिति; तन्न, भ्रमोहि ज्ञानद्वयमगृहीतभेदं, तदभावश्च गृहीतभेद ज्ञानं । नहि ज्ञानाभावे सुषुप्तौ भ्रमव्यवहारः । ततो भ्रमाभावनिश्चयानंतरं वक्तृज्ञानानुमानं ।

---

निर्वाहयतोमतमुपन्यस्यति ( यत्त्विति ) यत्तु तत्संसर्गाग्रहो भ्रमइति पाठः । संसर्गग्रहाभावो भ्रमइत्यर्थः । भ्रमस्य विशिष्टज्ञानानात्मकतया भ्रमस्थाने संसर्गाग्रहस्यावश्यकतया स एव भ्रम इत्यभिप्रायः । " यत्त्वसंसर्गाग्रहोभ्रम " इति क्वाचित्कः पाठ । तत्र यथाश्रुते असंसर्गग्रहाभावस्य संसर्गग्रहानात्मकतया तदभावस्संसर्गग्रहएवेत्यसंगतम् , अतो भ्रमपदात्पूर्वं मकारप्रश्लेषेण संसर्गग्रहाभावः, अभ्रमः-भ्रमाभावः, तदभावः तदात्मकोभावः , असंसर्गग्रहएवेत्यर्थ ( आप्तत्वानुमानान्तर्गतमेवेति ) अभ्रान्तत्वानुमानात्मकमेवेत्यर्थः । " वक्तृज्ञानानुमानम् "– वक्तृसंसर्गज्ञानानुमानं ( ज्ञानद्वयमगृहीत भेदमिति ) असंसर्गाग्रहविशिष्ट धर्मधर्मिविषयक ज्ञानद्वयमित्यर्थः ( तदभावश्चेति ) विशेष्यभूत ज्ञानद्वयकालीन स्तादृशविशिष्टाभावमित्यर्थं ( गृहीतभेदं ज्ञानमिति ) धर्मिणिधर्माभावविषयक ज्ञानरूपज्ञानं, नतु तयो स्संसर्गाग्रह इतिशेष. । संसर्गाग्रहएव कथ भ्रम इत्या शाकांक्षायामाह ( नहीति ) यतः सुषुप्तौ ज्ञानसामान्याभावसत्त्वेन संसर्गज्ञानाभावसत्त्वेपि, नसुप्ति भ्रान्तःच व्यवहार इत्यर्थ. ( वक्तृज्ञानानुमानमिति ) आवश्यकमितिशेष. । आप्तत्वानुमानस्य वक्तृसंसर्गज्ञानानुमानरूपत्वमते प्रथमानुमा

किञ्च यथाप्तोक्तत्वानुमानमेव वक्तृज्ञानानुमानं, तर्हि यादृशं लिङ्गं तादृशमेव गमकमस्त्विति ॥

इति चिन्तामणौ शब्दखण्डे शब्दप्रामाण्यवादे पूर्वपक्षः ।

---

वक्तृज्ञानानुमानाधीनं पदार्थज्ञानानुमानंच, व्यर्थमित्याह ( किंचेति ) तज्ज्ञानं यथार्थज्ञानानुमापकमितिशेषः । " तादृशमेव "- तज्ज्ञानमेवार्थः । " गमकमस्तु " - शाब्दप्रमाजनकमस्तु । तन्मते यथार्थज्ञानस्यैववक्तृयथार्थज्ञानानुमापकत्वादितिभावः ।

अत्रभ्रमाद्यभाव सहितभ्रमादिविशिष्ट ज्ञानान्यतरजन्य- वाक्यत्वरूपहेतुज्ञानस्य यथार्थज्ञानानुमापकतया गौरवेणतस्य शाब्दप्रमितिहेतुतया यथार्थतात्पर्यज्ञानस्यैव च हेतुतया प्रागवृत्तित्वेन तन्निर्वाहाय संसर्गानुमानस्य वक्तृज्ञानानुमानस्यावश्यकतया उक्तहेतुघटकविशेष्यतानिश्चयार्थं प्रथमानुमानस्य तथात्वमितिभाव । ।

केचित्तु-अभ्युपेत्य भ्रमाभावानुमानस्य वक्तृज्ञानानुमानत्वं भ्रमाभावानुमानानन्तरं वक्तृज्ञानानुमानं कर्तव्यमेवेत्याशयेनाह ( किञ्चेत्यादि ) (यादृशंलिङ्गमिति ) वक्तृयथार्थज्ञानानुमापकं लिङ्गघटकं पदं भ्रमशून्यत्वमित्यर्थः । इति व्याचक्षुः । (१)

इतिमूलगादाधर्यां शब्दप्रामाण्यवादपूर्वपक्षरहस्यम् ।

---

(१) अस्मत्संगृहीतेषु त्रिष्वपि गदाधरीय पुस्तकेष्वेतावानेव गदाधरीय ग्रन्थ उपलभ्यते । " अत्रोच्यते " इत्यादि मणिग्रन्थव्याख्यानभागः पुस्तकत्रयेऽपि नास्ति ।

यत्तु तत्संसर्गाग्रहो भ्रमः, तदभावश्च संसर्गग्रहएवेति भ्रमाभावेऽनुमीयमाने संसर्गज्ञानमेवानुमितमित्याप्तत्वानुमानांतर्गतमेव वक्तृज्ञानानुमानं, न तु वक्तृज्ञानानुमाने तल्लिङ्गमिति; तन्न, भ्रमो हि ज्ञानद्वयमगृहीतभेदं, तदभावश्च गृहीतभेद ज्ञानं । नहि ज्ञानाभावे सुषुप्तौ भ्रमव्यवहारः । ततो भ्रमाभावनिश्चयानंतरं वक्तृज्ञानानुमानं ।

---

निर्वाहयतोमतमुपन्यस्यति ( यत्त्विति ) यत्तु तत्संसर्गाग्रहो भ्रमइति पाठः । संसर्गग्रहाभावो भ्रमइत्यर्थः । भ्रमस्य विशिष्टज्ञानात्मकतया भ्रमस्थाने संसर्गाग्रहस्यावश्यकतया स एव भ्रम इत्यभिमानः । " यत्त्वसंसर्गाग्रहोभ्रम " इति क्वाचित्कः पाठः । तत्र यथाश्रुते असंसर्ग ग्रहाभावस्य संसर्गग्रहात्मकतया तदभावस्संसर्गग्रहएवेत्यसंगतम् , अतो भ्रमपदात्पूर्वं मकारप्रश्लेषेणासंसर्गग्रहाभावः, अभ्रमः-भ्रमाभावः, तदभावः तदात्मकोभावः , असंसर्गग्रहएवेत्यर्थः. ( आप्तत्वानुमानान्तर्गतमेवेति ) अभ्रान्तत्वानुमानात्मकमेवेत्यर्थः. । " वक्तृज्ञानानुमानम् "- वक्तृसंसर्गज्ञानानुमानं ( ज्ञानद्वयमगृहीत भेदमिति ) असंसर्गाग्रहविशिष्ट धर्मधर्मिविषयक ज्ञानद्वयमित्यर्थः ( तदभावश्चेति ) विशेष्यभूत ज्ञानद्वयकालीन स्तादृशविशिष्टाभावश्चेत्यर्थः ( गृहीतभेदं ज्ञानमिति ) धर्मिणिधर्माभावविषयक ज्ञानरूपज्ञानं, न तु तयो स्संसर्गाग्रह इतिशेषः । संसर्गाग्रहएव कथ भ्रम इत्या याकांक्षायामाह ( नहीति ) यतः सुषुप्तौ ज्ञानसामान्याभावसत्त्वेन संसर्गज्ञानाभावसत्वेऽपि, भ्रमांवि भ्रान्तत्व, व्यवहार इत्यर्थः. ( वक्तृज्ञानानुमानमिति ) आवश्यक मितिशेषः । आप्तत्वानुमानस्य वक्तृसंसर्गज्ञानानुमानापेक्षत्वे प्रथमानुमा

किञ्च यथाप्तोक्तत्वानुमानमेव वक्तृज्ञानानुमानं, तर्हि यादृशं लिङ्गं तादृशमेव गमकमस्त्विति ॥

इति चिन्तामणौ शब्दखण्डे शब्दप्रामाण्यवादे पूर्वपक्षः ।

---

वक्तृज्ञानानुमानाधीन पदार्थज्ञानानुमानंच, व्यर्थमित्याह ( किंचेति ) लिङ्गज्ञान यथार्थज्ञानानुमापकमितिशेषः । " तादृशमेव "- तज्ज्ञानमेवेत्यर्थः । " गमकमस्तु " - शाब्दप्रमाजनकमस्तु । तन्मते यथार्थज्ञान तात्पर्यस्यैववक्तृयथार्थज्ञानानुमापकत्वादितिभावः ।

अत्रभ्रमाद्यभाव सहितभ्रमादिविशिष्ट ज्ञानान्यतरजन्य- वाक्यत्वयो र्त्यावरूपहेतुज्ञानस्य यथार्थज्ञानानुमापकतया गौरवेणतस्य शाब्दप्रमित्य हेतुतया यथार्थतात्पर्यज्ञानस्यैव च हेतुतया प्रागवृत्तित्वेन तन्निर्वाहाय संसर्गानुमानस्य वक्तृज्ञानानुमानस्यावश्यकतया उक्तहेतुघटकाविशेष्य प्रागसिद्ध्यर्थं प्रथमानुमानस्य तथात्वमितिभाव ।

केचित्तु-अभ्युपेत्य भ्रमाभावानुमानस्य वक्तृज्ञानानुमानत्वं भ्रमाभावानुमानानंतरं वक्तृज्ञानानुमान कर्तव्यमेवेतीशयतिमाह ( किञ्चेत्यादि ) ( यादृशंलिङ्गमिति ) वक्तृयथार्थज्ञानानुमापक लिङ्गघटक पद भ्रमशून्यत्वमित्यर्थः । इति व्याचक्रु. । (१)

इतिमूलगादाधर्यां शब्दप्रामाण्यवादपूर्वपक्षरहस्यम् ।

---

(१) अस्मात्समुद्दिष्टेषु त्रिष्वपि गदाधरीय पुस्तकेष्वेतावानेव गदाधरीय ग्रन्थउपलभ्यते । " अत्रोच्यते " इत्यादि मणिग्रंथव्याख्यानभागः पुस्तकत्रयेपि नास्ति ।

" तद्वगम संसर्गानुमापकमस्तु । ' यथार्थधीपरत्व
र्धवाक्यार्थप्रतीतौ च्छयोच्चारितत्वरूपं यथार्थतात्पर
ज्ञातं प्रयोजकं, - न शाब्दप्रयोजकज्ञानाविषयः ।
चित्र न तद्धेतुत्वमितियावत् ( गौरवादिति ) "

इत्येतावान् ग्रंथः परं सिद्धान्तभागव्याख्यानरूपः पुस्तके
यत्तदुपरिचाकांक्षा अथव्याख्यानमस्ति । मन्यामहे च वयं
दुपरितनग्रंथोऽपि स्यादेवेति । येषांनिकटे स भागोऽस्ति तैः
भाग इत्यर्थयामहे ।'लब्धे च ग्रंथशेषे खण्डान्तरे तंभाग :
ष्यामः । अन्यथाचाकांक्षाग्रंथमेव मुद्रयिष्यामः । इति (